॥ श्रीः ॥

॥ श्री गोपीजनवल्लभाय नमः ॥

# संग्रहार्थसंग्रहः

पडमुन्नूरु श्री नारायणाचार्यैः

श्रीमन्मध्वसिद्धान्तप्रबोधिनीसंस्कृतमहापाठशालायाः

बहुकालमनुभूतन्यायवेदान्तप्रधानपण्डितपदैः न्यायमहाविद्वान्

तर्ककेसरी, न्यायवेदान्तवाचस्पतिरित्यादिबिरुदविराजमानैः

विरचितः

प्रकाशकाः

जगद्गुरुश्रीमदानन्दतीर्थभगवत्पादाचार्यपीठाधिरूढाः

श्रीअदमारुमठाधीशाः श्री १०८

श्रीविबुधेशतीर्थश्रीमच्चरणाः

१९५६

॥ श्रीः ॥

॥ श्री गोपीजनवल्लभाय नमः ॥

# संग्रहार्थसंग्रहः

पडमुन्नूरु श्री नारायणाचार्यैः

श्रीमन्मध्वसिद्धान्तप्रबोधिनीसंस्कृतमहापाठशालायाः

बहुकालमनुभूतन्यायवेदान्तप्रधानपण्डितपदैः न्यायमहाविद्वान्

तर्ककेसरी, न्यायवेदान्तवाचस्पतिरित्यादिबिरुदविराजमानैः

विरचितः

प्रकाशकाः

जगद्गुरुश्रीमदानन्दतीर्थभगवत्पादाचार्यपीठाधिरूढाः

श्रीअदमारुमठाधीशाः श्री १०८

श्रीविबुधेशतीर्थश्रीपादाः

॥ श्रीः ॥

श्रीमज्जगद्गुरुश्रीमदानन्दतीर्थभगवत्पदाचार्यसंस्थानश्रीश्रीकृष्णमठाधीशाः

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वादिबिरुदाङ्किताः

**श्री १०८ श्रीमद्विद्यासमुद्रतीर्थश्रीपादाः**

# उपोद्घातः

एते हि महानुभावा इतः पञ्चोत्तरषष्टितमाद्वत्सरात्पूर्वं प्रतीचीदिशनेति (पडमुन्नूरु) प्रसिद्धे ग्रामे पण्डितोत्तमानां श्रीमदनन्ताचार्येति सुगृहीतनामधेयानां सकाशात् श्रीमत्यां पद्मावतीनामिकायां विकृतिसंवत्सरस्य पुण्यामायुक्तचतुर्दश्यां जन्म प्राप्य बाल्य एव दैवदुर्विपाकात् मातापितृभ्यां वियुक्ताः धर्मशास्त्रे ज्योतिश्शास्त्रे साहित्यालङ्कारादौ च प्रथमपरिगणनीयतयाऽतिप्रथितानां रामाचार्येतिसुगृहीतनामधेयानां मातामहानां गृह एव श्रीकावेरीति नामालङ्कृतया भाग्यवत्या मातामह्या सुतनिर्विशेषं लालितास्तत्रैवान्नपानादिना पुष्टाश्च विद्याहीनोऽपि सत्पुरतः आस्तामिति लोकगाथामनुसृत्य मातामह्या पोषितत्वाद्द्वादशवत्सरपर्यंतमक्षरपरिचयेनापि शून्या आसन्निति विदितमेतत्तत्परिचयवताम् । तदनु असहिष्णुदैवेन भाग्यदैवतरूपया तादृश्या मातामह्याऽपि वियोजिताः अनाथे स्वगृहे अंधन्तमसीव सर्वतः शून्यमेव पश्यन्तः स्वयमप्यनाथाः दैवेन प्रेरिताः गृहान्निर्गत्य केनाप्यविदिताः देशान्तरं गता इति पूर्वतनी दशा । ततो देशान्तरेऽपरिचितत्वाज्जनानुरागसंपादनाकौशलात्कथंकथंकारमप्येकभुक्त्यैव दिनान्यतिवाहयित्वा एवं द्वित्रेषु वर्षेषु गतेषु दैवयोगात्काञ्चि-

व्यवस्थितिमालम्ब्य साहित्यन्यायवेदान्तशास्त्राण्यभ्यस्य महीशूरपुर्यां प्रच-लितविद्वत्परीक्षायां न्यायशास्त्रे उत्तमकक्षायामुत्तीर्णाः । तदनु रजतपीठपुरे श्रीमत्परमहंसेत्यादि विरुदविराजमानैः श्रीमद्विबुधप्रियतीर्थेत्यन्वर्थनामव-द्भिरपि नामशेषैः पण्डितमण्डलीमण्डनायमानैर्महोदारैः प्रातस्संस्मरणीय-नामभिः श्रीमच्चरणैर्वेदान्तमहापाठशालां प्रारिप्सुभिराहूता. इतरेषां श्रीश्रीमच्चरणानामैकमत्येनेमे आदित एव न्यायप्रधानाध्यापकपद-वीमधिरोहिताः ।

तदनु सोदामठाधीशैः कीर्तिशेषैः श्रीमद्विश्वेन्द्रतीर्थश्रीमच्चरणैः स्व-सुतनिर्विशेषाणामस्माकं कृते अध्यापकतया एते नियोजिताः । एवमेव श्रीविबुधप्रियतीर्थश्रीमच्चरणैरपि स्वशिष्यफलिमारुस्वामिनां पर्यायमहोत्सव-काले स्वीयामेव नवां काञ्चन परमहंसपाठशालेति प्रथितां शालां कृष्णमठे निर्माय तत्र फलिमारुमठीयरघुमान्यतीर्थश्रीमच्चरणानां पुत्तिकामठाधीश-सुज्ञानेन्द्रतीर्थश्रीमच्चरणानां, पेजावरमठाधीशविश्वमान्यतीर्थश्रीमच्चरणानां च पाठकतया नियोजिताः

एवमेव पश्चात् श्रीमद्विबुधप्रियतीर्थश्रीमच्चरणेषु नामशेषेषु तत्प-दाधिरूढानां तत्करकमलसञ्जातानां श्रीविबुधमान्यतीर्थानां पाठनेऽपि तन्मठाधिपैरिम एव स्थापिता इति प्रथितमेवैतत्सर्वेषाम् ।

एवमेवोत्तरत्रादमारुमठीयपदाधिरूढानां श्रीविबुधेशतीर्थश्रीमच्चर-णानां सांप्रतिकपर्यायपीठाधिरूढानामपि पाठनाय फलिमारुमठीययशोमात्र-शेषरघुमान्यतीर्थश्रीमच्चरणैर्नियोजिता इतीदमेवामीषां प्रत्यहं वर्धमानां प्रथां प्रकटयतीति नास्माकमधिकं वक्तव्यमस्ति । अत एवाद्यतने पर्याय-

महोत्सवारंभकाले श्रीपर्यायपीठाधिरूढाः इतरैस्सर्वैः श्रीमच्चरणैस्संभूया मीषां प्रशस्तिपत्रिकां प्रादुरितीदं श्रीमच्चरणानां कर्म सर्वश्लाघास्पदं को नाम नाभिनंदेत् । अमीभिः प्रकृतैराचार्यैः रचितेषु त्रिषु निबन्धेषु 'न्यायामृतकुल्या'ख्या प्रथिताऽस्ति, सा बाल्य एव नाम विद्याभ्यासदशायामेव रचिता. अदमारुमठीयश्रीमद्विबुधप्रियतीर्थमहोदारैः प्रचालितायां सभायामयं प्रबन्धः प्रागेव सम्यक् परीक्ष्य मानितः संभाविताश्चामी ।

द्वितीयः पञ्चसख्याख्यानामकः प्रबन्धस्तु यशश्शरीराणां सोदामठाधीशानामस्मद्गुरुवरेण्यानां श्रीश्रीविश्वेन्द्रतीर्थश्रीमच्चरणानामाज्ञयैव विरचितः । महानुभावैस्तैरेव श्रीमच्चरणैः प्रकाशितश्च । तृतीयस्तु तृतीयप्रबन्धोक्तरीत्या श्रीमन्निडंबूरु नारायणवल्लाळप्रार्थनानुसारेण रचित इति. अयंतु प्रकृतपर्यायपदाधिरूढैः प्रकाशितः । उर्वरितः आदिमस्तु प्रबन्धः अस्माभिरेव प्राकाश्यं नीत इति तद्ग्रन्थद्रष्टॄणां स्फुटमेवेति न पृथग्वक्तव्यम् । एतेषां विद्यमानसार्वत्रिकपाण्डित्ये एते प्रबन्धास्साक्षिभूता इति नास्मदीयतया किमप्यधिकमत्रावेदितमिति परिकलयंतु सहृदयाः । एवमेवेमे बहुकालं विद्यार्थिनां विद्यादानेनोपकुर्वंतस्स्युरिति तदर्थममीषामायुरारोग्यादिसर्वश्रेयोदानेन श्रीमन्मध्वान्तर्यामिश्रीकृष्णविठ्ठलावस्मदाराध्यावनुगृह्णीतामिति तावेव देवौ पौनःपुन्येन प्रार्थयामः ।

श्रीरूप्यपीठपुरम्<br>
शा. शके १८७९ तमे<br>
मन्मथाब्दीय पुष्यबहुळ<br>
पञ्चम्यां बुधवासरे

॥ श्रीः ॥

# इयमेकाऽपूर्वाऽपि पूर्वोक्तिः ।

एतद्ग्रन्थकर्तॄणां परिचयस्तावत् एतत्प्रकाशनं स्ववचोऽमृतेनानुगृहीतवद्भिः श्रीश्रीलक्ष्मींद्रतीर्थश्रीमच्चरणैरुपोद्घातावसर एव सम्यङ्निरूपित इति तत्रार्वाचीनत्वादस्माकं न समीचीनं ज्ञानमिति च न तत्र वयं प्रयतामहे ।

न्यायशास्त्राध्ययनारंभे तर्कसंग्रहाध्ययनकाले इदानीं प्रकाशं नीयमानेयं कृतिर्महतीमस्माकमुपकृतिं कृतवतीति तदानीमेव विचिंतितमस्माभिः यदस्य ग्रन्थस्यावश्यं प्रकाशः कर्तव्य इति । न केवलमेतत्— किंतु यद्ग्रन्थकर्तॄणां समीप एवास्माकं तर्कशास्त्राद्यभ्यासः । अतोऽपि आस्माकीनोऽयं प्रकाशनप्रयत्नः कृतज्ञताप्रदर्शनप्रयत्न एवेति मन्यामहे ।

अत्र यद्यस्ति कोऽपि दोषो मुद्रणसमये समापतितः यथा तृतीयपुटे नवमपङ्क्तौ रूपासमानाधिकरणत्वस्येति स्थाने रूपासमानाधिकरणवृत्तित्वस्येत्यबद्धं पतितमस्ति. तादृशाः दोषाः अवश्यं सूच्यंतां सुहृद्भिः साधुजनैरिति ।

श्रीमज्जगद्गुरुश्रीमदानन्दतीर्थभगवत्पादाचार्यसंस्थान

श्रीपर्यायश्रीमदद्मारुमठाधीशाः श्रीमत्परमहंसेत्यादिबिरुदविराजमानाः

**श्री १०८ श्रीविबुधेशतीर्थश्रीमच्चरणाः**

श्रीः ॥

# ग्रन्थकर्तृविज्ञप्तिः

अत्र समये इदमननुक्त्वा स्थातुं नोत्सहतेऽस्मदीयं मनः । यदस्मासु श्रीश्रीमतां श्रीकृष्णमठाधीशानां लक्ष्मीन्द्रतीर्थश्रीमच्चरणानां यावान् प्रेमातिशयः स वाचामगोचरः अस्मदनुभवैकवेद्य । एतेहि श्रीमच्चरणाः न्यायामृतकुल्येतिनामकमस्मद्विरचितमस्मत्प्रार्थनादिकं विना स्वयमेव व्ययभारमूढ्वा मुद्रणादिना प्राकाश्यं नीतवन्त इतीदमेकमेवामीषां श्रीमच्चरणानामस्मासु विद्यमानं प्रेमातिशयं द्योतयति. यतोहि श्रीमच्चरणानां प्रायः बाल्यावस्थायां सत्यामस्मदज्ञानतः प्रागेव ग्रन्थोऽयमस्माभीरचित इति तेषामेतावत्पर्यन्तमविदित एवासीत् । इदानीमेव विदित । तदव्यवहितोत्तरक्षण एव प्रकाशित इति ।

एवमेवास्मत्तनुसमपर्यायद्रव्यवोढृत्वेन कल्पनातीतव्ययकरणसमयेऽप्यस्य सङ्ग्रहार्थसङ्ग्रहस्य मुद्रणादिविषये सर्वमपि भारं किमपि मनोवैक्लव्यमनासाद्य स्वयमूढ्वा दत्तहस्तावलम्बानां श्री अदमारुमठीयश्रीविबुधेशतीर्थश्रीमच्चरणानां विद्यापक्षपातिता अस्मास्वभिमानातिशयश्च नास्मादृशैर्वाचा वक्तुं शक्यः योग्यशब्दसमुदायादर्शनात् ।

अत केवलं ललाटतटचुम्बदञ्जलिपुटं देवदेवं श्रीकृष्णं तेषां श्रीश्रीलक्ष्मीन्द्रतीर्थश्रीमच्चरणानां, श्रीश्रीविबुधेशतीर्थश्रीमच्चरणानां चायुरारोग्यज्ञानभक्तिवैराग्यादिदानेन तान् गुरुवरेण्यान् वर्धयत्विति संप्रार्थ्य प्रणमामः ।

कृतकालमनतिक्रम्य सम्यक् मुद्रापयित्वाऽस्मत्कार्यनिर्वहितॄणां मेजिष्टिक् प्रेस् अधिकारिणां तत्कर्मकराणां च देवः श्रेयआदिदानेनानुगृह्णात्विति आशास्महे ।

॥ श्रीः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमध्वेशाय नमः ॥

# अथ संग्रहार्थसंग्रहः



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः॥

गोपीजनेशकृपया नारायणपदी कृती । तनुते संग्रहार्थस्य नवं किमपि कौतुकम् ॥ अथ पदार्थाः सप्तेतिवाक्यात् पट्टाभिरामोक्तरीत्या पदार्थेषु सप्तप्रकारान्यतमवद्भेदलाभेऽपि सप्तपदं किमर्थमिति विचार्यते । अत्र केचित् पदार्थत्वं सप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाये-त्यूचिरे । तत्र परे क्षमन्ते । यतो हि द्रव्याद्यभावान्तपदस्य द्रव्यत्वाद्य-न्यतमवदर्थकत्वेन तस्याभेदेन पदार्थेष्वन्वयादेव उद्देश्यविधेयभावमहिम्ना व्याप्तिलाभः संभवति । न्यूनाधिकसंख्याव्यवच्छेदायेति तु स्वयमेवा-हान्नंभट्टो दीपिकायाम् । अत्रापीयमनुपपत्तिरवतरति । यद्यपि पदार्थ-पदोत्तरजसा द्वारा इत्यत्रेव व्यर्थत्वासंभवेन सप्तत्वसंख्याबोधस्य संभव इति नोपपद्यते । जसो बहुत्वमात्रार्थकत्वात् । अन्यथा घटाः सन्तीति वाक्यं श्रुतवतो नियमेन सप्तत्वस्य जसा बोधनात् कति घटा इति सन्देहो

नावतरेत् । तथापि द्रव्यगुणकर्मसामान्यविशेषसमवायाभावा इत्यत्रत्य-जसा सप्तत्वबोधने बाधकाभावात् । द्वन्द्वोत्तरश्रूयमाणप्रत्ययस्य द्वन्द्व-घटकयावत्पदार्थपर्याप्तसंख्याबोधकत्वनियमेन तादृशसंख्यायाः प्रकृते-सप्तत्वरूपत्वात् । विभागवाक्यघटकसंख्यावाचकपदस्य न्यूनाधिकसंख्या-निराससहितसंख्याविशेषार्थकत्वेन प्रकृते विभागवाक्यत्वेनाभावपदो-त्तरजसैव न्यूनाधिकसंख्यानिरासहितसप्तत्वसंख्याबोधसंभवे सप्तपदं व्यर्थमिति । वयन्तु ब्रूम । अयमाशयोऽन्नंभट्टस्य । यद्विशेषणपदोत्तर-विभक्तेर्निरर्थकत्वस्याभेदार्थकत्वस्य वा व्युत्पत्तिवादादौ व्यवस्थापिततया प्रकृते अभावपदोत्तरजसो विशेषणपदोत्तरविभक्तित्वेन निरर्थकत्वमभे-दार्थकत्वं वेति सप्तत्वबोधाय पृथगेव सप्तपदमावश्यकमिति । आस्तां तद्वेदमेतत् । कोऽयं न्यूनाधिकसंख्यानिरासो नाम । नचाभाव एव नि-रासः । पदार्थेषु प्रत्येकं न्यूनभूतैकत्वसंख्याया अनन्तत्वेनाधिकसंख्या-याश्च सत्त्वात्कथं तयोरभावः पदार्थेषु संभावितः । अपि चैकत्वाधिकाया अष्टत्वन्यूनायाः सप्तत्वसंख्यायाः स्वयमभ्युपगमात्कथं तदभावः । तथाच सप्तपदस्य विगतार्थत्वाभावेऽपि विरुद्धार्थत्वरूपवैयर्थ्यं दुष्परिहरमिति । अथ स्वापेक्षया न्यूनत्वस्याधिकत्वस्य च विवक्षितत्वात् न्यूनामधि-कां च सप्तत्वसंख्यामादाय नोक्तदोषः । परस्परासमानाधिकरणवृत्तित्वस्य विवक्षणाच्च संख्यायां, पदार्थानामानन्त्येनाष्टत्वादिसंख्यामादायाप्युक्तस्य दोषस्य नावकाशः । ईदृशी च संख्या सप्तपदेन पदार्थविभाजकोपाधिष्वेव बोध्यते । तथाच पदार्थानामानन्त्येऽपि विभाजकोपाधीनां सप्तत्वात् तत्रा-ष्टत्वाद्यधिकसंख्याभावो न बाधितः । सप्तत्वस्य च स्वापेक्षया न्यूनाधि-

कत्वाभावात् न तदादायापि दोषः । घटत्वादिसाहित्येन पदार्थविभाजकोपाधिषु विद्यमानाप्यष्टत्वादिसंख्या न परस्परासमानाधिकरणवृत्तिः । द्रव्यत्वघटपटत्वादीनां परस्परं समानाधिकरणत्वात्परस्परसमानाधिकरणवृत्ति यद्यत् तद्भिन्नत्वरूपासमानाधिकरणवृत्तित्वस्य विवक्षितत्वान्न "भक्षितेऽपि लशुन"इति न्यायावसरः । अन्यथा घटत्वसाहित्येनोपाधिषु विद्यमानाया अष्टत्वसंख्यायाः परस्परासमानाधिकरणद्रव्यत्वगुणत्वादिवृत्तित्वेनोक्तकथन्ताऽनिवृत्त्यापत्तेः । नचैवमपि गगनसाहित्येनोपाधिष्वष्टत्वसंख्यावत्सु तदभावासंभवः । गगनेऽपि परस्परसमानाधिकरणं यद्यत्तदन्यत्वरूपासमानाधिकरणवृत्तित्वस्य सद्भावादिति वाच्यम् । धर्मविशिष्टान्याधिकसंख्याशून्यत्वस्य विवक्षितत्वात् । धर्मवैशिष्ट्यं च स्वविशिष्टधर्मवृत्तित्वस्वसमानकालीनप्रमेयत्वविशिष्टयत्किंचिद्व्यक्तिवृत्तित्वान्यतरसम्बन्धेन। धर्मे स्ववैशिष्ट्यं च स्वभिन्नत्वस्वसमानाधिकरणत्वोभयसम्बन्धेन । यत्किंचिद्व्यक्तौ प्रमेयत्ववैशिष्ट्यं च स्वाधिकरणनिरूपितवृत्तित्वाभावसम्बन्धेन । अत्रान्यतरसम्बन्धनिवेशात् घटसाहित्येन गगनसाहित्येन वा उपाधिष्वष्टत्वसंख्यामादाय नोक्तदोष इति चेदेवमपि सप्तत्वाधिकत्वस्य सप्तत्वव्यापकत्वरूपत्वेन स्वस्मिन् स्वव्यापकत्वसंभवात सप्तत्वरूपस्वाधिकतादृशसंख्यामादाय बाधस्य को निवारयिता । किंच पदार्थविभाजकोपाधिगतसप्तत्वसंख्याया अपि धमविशिष्टत्वेन तदन्यत्वाभावेनासंभवस्य कः परिहारः । तथा हि धर्मपदेन घटत्वादिकमुपादाय स्वभिन्नत्वस्वसमानाधिकरणत्वोभयसम्बन्धेन तद्विशिष्टद्रव्यत्वादिवृत्तित्वेनान्यतरसम्बन्धेन धर्मविशिष्टान्यत्वाभावात् । तथाच सप्तपदस्य

विरुद्धार्थत्वं दुर्वारमिति । अत्रेदं समाधानमाकलनीयम् । स्वाधिकत्वं नाम स्वाश्रययावद्व्यक्तिवृत्तित्वस्वानाश्रयवृत्तित्वोभयसम्बन्धेन स्वविशिष्टत्वम् । अतः सप्तत्वस्य तादृशसप्तत्वाधिकत्वाभावान्नाधिकसंख्यापदेन सप्तत्वमुपादायोक्तबाधः । पूर्वोक्तानुगमे धर्मविशिष्टान्येत्यत्र धर्मपदेन पदार्थविभाजकोपाधेरेव ग्रहणात् न घटत्वादिकमुपादाय स्वभिन्नत्वस्वसमानाधिकरणत्वरूपोक्तोभयसंबन्धेन घटत्वविशिष्टद्रव्यत्वादिवृत्तित्वेन सप्तत्वस्येत्युक्तासंभवः । इतः परमेकत्वादिन्यूनसंख्यामादाय बाधशंकैकोर्वरिता । तथापि न्यूनाधिकसंख्याभावपदेन पदार्थविभाजकोपाधित्वसमनियतन्यूनाधिकसंख्याभावमर्थं विवक्षित्वा सर्वाः शङ्काः परिहाणीयाः । तथाहि । घटत्वादिसाहित्येन विद्यमानाष्टत्वादिसंख्यायास्तादृशोपाधित्वव्याप्यत्वाभावात् । उपाधित्वाभाववति घटत्वादावपि तादृशाष्टत्वसंख्यायाः सत्त्वात् । एकत्वादिसंख्यायाश्च तादृशोपाधित्वव्यापकत्वाभावात् । यद्यपि सर्वेषूपाधिषु एकत्वत्वेन रूपेणैकत्वस्य सत्त्वादेकत्वे उपाधित्वव्यापकत्वाभावकथनमयुक्तमिव प्रतिभाति । तथापि तत्तद्व्यक्तित्वेन रूपेण व्याप्यव्यापकभावस्येह विवक्षितत्वात् कस्या अप्येकत्वव्यक्तेर्यावदुपाधिवृत्तित्वाभावेन व्यापकत्वायोगात् । नचैवं सति पदार्थविभाजकोपाधित्वसमनियतन्यूनाधिकसंख्याभावसहितसप्तत्वसंख्यावद्द्रव्यत्वाद्यन्यतमवद्भिन्नाः पदार्था इति पर्यवसितम् । तथाच तादृशोपाधित्वसमनियतन्यूनाधिकसंख्यायाः प्रमितत्वे तत एवाप्रमितत्वे प्रतियोगिप्रमित्यभावाच्चन्निरासासंभव इति वाच्यम् । न्यूनाधिकसंख्यायामन्यत्र प्रमितायां पदार्थविभाजकोपाधित्वसमनैयत्यनिषेधे तादृशार्थस्य तात्पर्यात् ।

"विशिष्टे विधीयमानौ विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामत"इति न्यायस्य प्रकृतेऽपि साम्यात् । अथवा उद्देश्यतावच्छेदकव्यापिका उद्देश्यतावच्छेदकन्यूनवृत्तिमात्रवृत्तिः वस्तुमदन्या च संख्या विभाजकवाक्यघटकसंख्यावाचकपदार्थः । भवति च तादृशी संख्या प्रकृते सप्तत्वरूपा यावदुपाधिवृत्तिः । तथाहि । व्यापकत्वं संख्यायाः स्वाश्रयाश्रयत्वसंबन्धेन विवक्षितम् । तथाचोद्देश्यतावच्छेदकपदार्थत्ववति सर्वत्रोक्तसंबन्धेन सप्तत्वसंख्यायाः सत्त्वाद्व्यापकत्वोपपत्तिः । सप्तत्वसंख्यायाः द्रव्यत्वाद्युपाधिमात्रवृत्तित्वेनोद्देश्यतावच्छेदकन्यूनवृत्तिमात्रवृत्तित्वस्याप्युपपत्तिः । वस्तुमदन्येत्यत्र वस्तुमत्त्वं स्ववृत्तित्वस्वविशिष्टवृत्तित्वोभयसंबन्धेन विवक्षितम् । स्ववैशिष्ट्यं च स्वभिन्नत्वस्वसमानाधिकरणत्वोभयसंबन्धेन । तथाच । पदार्थविभाजकोपाधिगतसप्तत्वसंख्यायाः परस्परसमानाधिकरणवृत्तित्वरूपवस्तुमत्त्वाभावात् वस्तुमदन्यत्वम् । इत्थंचोद्देश्यतावच्छेदकव्यापिका उद्देश्यतावच्छेदकन्यूनवृत्तिमात्रवृत्तिः वस्तुमदन्या च संख्येत्यत्र प्रत्येकमेकत्वादिसंख्यामादाय पूर्वोक्तदोषवारणाय व्यापकत्वनिवेशः । गगनसाहित्येनाष्टत्वादिसंख्यामादायोक्तदोषवारणाय न्यूनवृत्तिमात्रवृत्तित्वनिवेशः । घटादिसाहित्येनाष्टत्वादिसंख्यामादायोक्तदोषवारणाय वस्तुमदन्यत्वनिवेशः । वारणप्रकारश्च विस्तरभिया नेह लिख्यते । सुधीभिराकलनीयः । एवमन्यत्रापि संख्यावाचकपदस्य विगतार्थत्वविरुद्धार्थत्वरूपद्विविधवैयर्थ्यं परिहरणीयमित्यलं पल्लवितेन । अथ पदार्थविभाजकशक्तित्वरूपोपाधिसाहित्येनोपाधित्वसमनियताष्टत्वसंख्याया उपाधिषु सद्भावा-

त्राधिकसंख्यानिरासो युज्यत इति चेन्मैवमविचारितरमणीयं भाषिष्ठाः। "सति धर्मिणि धर्माश्चिन्तनीयाः" इति हि नियमः। प्रकृते शक्तिसद्भाव एव न मानम्। सत्यपि तस्मिन्नातिरिक्तत्वं तस्यावगच्छामः। यद्यपि मणिर्दाहानुकूलधर्मनाशकः दाहानुत्पत्तिकारणत्वात् यद्यदनुत्पत्तिकारणं तत्तदनुकूलधर्मनाशकं यथा दारुदहनविभागः। स हि दाहानुत्पत्तिकारणं दाहानुकूलसंयोगाख्यधर्मनाशकश्च ईदृशसामान्यमुख्या व्याप्त्या तद्घटिताऽनुमानेन वा दाहानुकूलधर्मरूपशक्तिसिद्धौ क्लृप्तातिरिक्तत्वं च परिशेषानुमानात्सिध्यति। तत्प्रकारश्च शक्तिरतिरिक्तः पदार्थः द्रव्याद्यनन्तर्भूतत्वे सति पदार्थत्वादिति। अत्र विशेष्यासिद्धिशङ्का पूर्वानुमानेन परिहृता। विशेषणासिद्धिस्तु शक्तिर्द्रव्याद्यनन्तर्भूता षड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वात्। अत्रापि विशेष्यविशेषणासिद्धिशङ्के तु मुक्तावल्युक्तदिशा निरसनीये इति शक्तिसद्भावे संभवति प्रमाणम्। तथापि ग्रन्थकारस्त्वप्रयोजकं मन्यमानः पर्यत्याक्षीदनुमानमिदम्। निराकार्षीचान्यत्र। तथाहि। तिष्ठतु दाहानुत्पत्तिकारणत्वं मा भूद्दाहानुकूलधर्मनाशकत्वमित्यप्रयोजकत्वशङ्कायां किमुत्तरम्। ननु दाहानुत्पत्तिकारणत्वस्यान्यथानुपपत्त्या निर्मूलेयं शङ्कैव नावतरतीति चेत् न। दाहानुत्पत्तिकारणत्वस्य दाहप्रतिबन्धकत्वेनाप्युपपत्त्याऽन्यथानुपपत्तेरभावात्। ननु विषमोऽयमुपन्यासः। दाहप्रतिबन्धकत्वस्य दाहानुकूलधर्मनाशकत्वरूपत्वादिति चेद्भ्रान्तोऽसि। नहि प्रतिबन्धकत्वमीदृशं येनोपन्यासवैषम्यं स्यात् किं नाम कारणीभूताभावप्रतियोगित्वम्। नन्वस्तु तावदेवं। तथाऽपि प्रतारणामात्रमिदं वचः। न वस्तुतत्वमवलंब्याभिहितम्।

यतो हि दाहानुत्पत्तिकारणत्वं दाहानुकूलधर्मनाशकत्वेन दाहप्रतिबन्धकत्वेन वोपपन्नमिति वदतः उभयमपि प्रयोजकत्वेनोरीकुर्वतः एकस्यैव प्रयोजकत्वे नियामकमप्रदर्शयतः इदं शक्तेर्न साधकं अन्यथाऽप्युपपन्नत्वादिति वचसि कः श्रद्धत्ताम । विनिगमनाविरहेण शक्तेरपि सिद्धिसंभवादिति चेन्मैवम् । अस्यत्राभिप्रायविशेष । दाहानुत्पत्तिकारणत्वं प्रति दाहप्रतिबन्धकत्वमेव प्रयोजकम् । नतु दाहानुकूलधर्मनाशकत्वम् । तथात्वे गौरवात् । तथाहि । वन्हिगता शक्तिर्न तावन्नित्या । मणिसत्त्वेऽपि दाहापत्तेः । मणेर्नाशकत्वानुपपत्तेश्च । अतोऽनित्येत्यवश्यमभ्युपेयम् । तथाच तादृशानित्यशक्तेः कारणं वह्निरेव । तथाच वह्निरूपकारणसद्भावात् मणिनैकशक्तिनाशेऽप्युत्पन्नापरशक्त्या दाहः स्यात् । उत्पन्नाऽप्यपरा शक्तिः मणिना नश्यतीति चेन्नश्यतु । पुनरुत्पन्नया शक्त्या भवतु दाहः । यावती वन्हौ शक्तिपरंपरोत्पद्यते तावती सर्वाऽपि नाशकबलान्नश्यतीति चेदिदमेकमनन्तशक्तिकल्पनाप्रयुक्तगौरवम् । किंच मणिः शक्तिनाशक इति वदन् प्रष्टव्यो भवति । शक्तिनाशकत्वं च मणेः किं मणित्वेनोत शक्तिमन्मणित्वेन नाऽद्यः । उत्तेजकदशायामपि नाशकतावच्छेदकीभूतमणित्वाक्रान्तमणिरूपनाशकसद्भावाद्दाहानापत्तिः । द्वितीये तूत्तेजकबलान्मणिगतशक्तिनाशेऽपि मणिरूपकारणबलादुत्पन्नया शक्त्या विशिष्टमणिसद्भावाद्दाहानापत्तिः । यावती शक्तिरुत्पद्यते मणौ सा सर्वाऽप्युत्तेजकान्नश्यतीति चेदिदमपरमनन्तशक्तितध्वंसतत्प्रागभावकल्पनाप्रयुक्तगौरवम् । एवमुत्तेजकस्याप्युत्तेजकत्वेन मणिगतशक्तिनाशकत्वं वा शक्तिमदुत्तेजकत्वेन वा । नाऽऽद्यः । उत्तेजकस्यापि किं

चिन् प्रतिबन्धकदशायां दाहो न भवति । स्यात् । मणिगतशक्तिनाशक-ताऽवच्छेदकोत्तेजकत्वाक्रान्तस्य सत्त्वात् । न द्वितीयः । प्रतिबन्धकवशा-दुत्तेजके एकशक्तिनाशेऽपि शक्त्यन्तरोत्पादाद्दाहापत्तिः । सर्वाऽप्युत्पन्ना शक्तिर्नश्यतीति चेदिदमन्यदनन्तशक्तितध्वंसतत्प्रागभावकल्पनाप्रयुक्तं गौरवमित्यन्यत्र विस्तरः । सर्वमिद"मनेनैव सामञ्जस्ये अनन्तशक्ति-तध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वादि"ति वदन् विश्वनाथपञ्चान-नभट्टाचार्योऽप्यभिप्रैति । अत उपाधिषु सप्तत्वस्य निर्बाधत्वात्सूक्तं मूलकृता सप्तेति सर्वमनवद्यम् ।

॥ विशेषास्त्वनन्ता एव ॥

अत्र किं नामानन्तत्वम् । न तावत्संख्याशून्यत्वं संख्यायाः पदार्थ-त्वव्यापकत्वेन तच्छून्यत्वे पदार्थत्वमेव भज्येत । नापि व्याप्यसंख्या-शून्यत्वं तस्य दुर्वचत्वात् । परार्धत्वाद्यन्यतमासु संख्यासु तद्द्विगुणित त्रिगुणितदशगुणितादिसंख्यासद्भावेपि परार्धत्वादिव्याप्यसंख्या नास्ती-त्यस्य शते पञ्चाशन्न्यायेन व्याप्यसंख्याया अपि सत्त्वेन वक्तुमशक्य-त्वात् । नापि परिच्छिन्नसंख्याशून्यत्वं तत् । परिच्छिन्नत्वस्य परि-माणविशेषायत्तस्य निष्परिमाणसंख्यायामसंभवात् । अत्र पट्टाभिरामः । संख्यात्वव्याप्यधर्मावच्छिन्नप्रकारकजीवीयनिश्चयविशेष्यताशून्यत्वमनन्तत्व-मिति पिहितचक्षुरिवाह । अत्राप्यनुपपत्तेर्जागरूकत्वात् । तथाहि । संख्यात्वव्याप्यमेकत्वत्वं तदवच्छिन्ना एकत्वसंख्या तत्प्रकारको जीवीयो निश्चयः एकैकस्मिन् परमाणावेकैको विशेष इत्याकारकः । तद्विशेष्यत्वस्य विशेषेषु सत्त्वेन तच्छून्यत्वस्याभावात् । वयन्तु ब्रूमः ।

अयमाशयः पट्टाभिरामस्य । यत् विशेषत्वव्यापकत्वं संख्यात्वव्याप्यधर्मावच्छिन्ने प्रविष्टमिति । तथाच विशेषत्वव्यापकसंख्यात्वव्याप्यधर्मावच्छिन्नप्रकारकजीवीयनिश्चयविशेष्यताशून्यत्वमिति विवक्षणान्न पूर्वोक्तदोषावकाशः । विशेषेषु एकत्वप्रकारकपूर्वोक्तजीवीयनिश्चयविशेष्यता सद्भावेऽपि तदेकत्वस्य विशेषत्वव्यापकत्वाभावात्कस्याप्येकत्वस्य तत्त व्यक्तित्वेन यावद्विशेषवृत्तित्वाभावात् । एतेनैकत्वत्वेन रूपेणैकत्वस्य केवलान्वयित्वादेकत्वे विशेषत्वव्यापकत्वाभावोक्तिरयुक्तेति परास्तम् । एकत्वत्वेन तद्व्यापकत्वेऽपि तत्तद्व्यक्तित्वेन तदव्यापकत्वात् तेनैव रूपेण च व्यापकत्वस्य लक्षणे प्रवेशात् । अथात्र तादृशनिश्चयविशेष्यत्वस्य प्रमितत्वे निषेधायोगः । अप्रमितत्वेऽपि तथा प्रतियोगिप्रमितेरभावात् निषेधायोग एव इति चेत् । विशेषविशेष्यकजीवीयनिश्चयप्रकारीभूत संख्यात्वव्याप्यधर्मावच्छिन्ने विशेषत्वव्यापकत्वस्य पदार्थत्वादौ प्रमितस्य निषेधस्य विवक्षितत्वादिति परिकलय । विशेषत्वस्य व्यापकत्वाभाववज्जीवीयनिश्चयविषयसंख्यात्वव्याप्यधर्मावच्छिन्नवत्त्वमिति तु तत्वम् ।

॥ समवायस्त्वेक एव ॥

तुशब्दस्य पूर्वस्माद्विशेषोऽर्थः । स च समवायत्वव्याप्यविभाजकधर्मशून्यत्वम् । समवाये समवायत्वरूपविभाजकोपाधिसत्त्वेऽपि तस्य तदव्याप्यत्वात् । अन्यस्य चोपाधेरभावात् । एकपदस्य स्वसजातीय द्वितीयरहितोऽर्थः । तदेकदेशराहित्यान्वयिअप्रामाण्यशङ्काऽविषयत्वमेवकारार्थः । तथाच पूर्वस्माद्द्रव्यादित उक्तविशेषवान् समवायः अप्रामाण्य-

शङ्काविषयताशून्यस्वसजातीयद्वितीयराहित्यवदभिन्न इति विशिष्ट-वाक्यार्थः । नन्वत्र समवायस्यापि पदार्थत्वादिना स्वसजातीयघटादि-द्वितीयसाहित्यात्कथमेकत्वोपपत्तिः पदार्थविभाजकोपाधिना साजात्यं विवक्षित्वा घटादेस्तादृशस्वसजातीयत्वाभावेन वारणेऽपि तादृशस्वसजा-तीयद्वितीयाप्रसिद्धिः । स्वसजातीयद्वितीयसहितं यत्तदन्यत्वस्य तदर्थत्वे यद्यपि नाप्रसिद्धिः । पूर्वं स्वपदार्थस्यानुयोगिकोटौ प्रवेशात् । अधुना तु प्रतियोगिकोटौ प्रविष्टत्वात् । तथाच स्वसजातीयद्वितीयसहितं यद्घटा-दिकं प्रसिद्धमेव । तदन्यत्वस्य समवाये अबाधात् । तथापि स्वसजा-तीयद्वितीयसहितं यद्घटादिकं तदन्यत्वस्य पटादावपि सत्त्वात्स्वपदस्य बुद्धिस्थतत्तद्व्यक्तिमात्रपरत्वेनाननुगतत्वेन स्वपदेनैकैकव्यक्तिमुपादाया-न्यस्यां व्यक्तौ तदन्यत्वसंभवात् । ईदृशैकत्वस्य सार्वत्रिकत्वेन सम-वायस्त्वेक एवेति विशिष्य कथने बीजाभावात् । अतः स्वसजातीय द्वितीयसहितं यद्यत्तद्भेदकूटवत्त्वं विवक्षित्वा घटादेर्यद्यदन्तःपातित्वेन तत्तदन्यत्वाभावान्नैतादृशैकत्वम् । किन्तु समवायस्यैवेति पूर्वोक्तापत्ति-र्वारणीया । एवं च सजातीयपदार्थानामानन्त्येन तत्तद्भेदकूटवत्त्वं प्रति-योग्यज्ञानाद्दुर्ज्ञेयमिति शिष्यबोधाय कृतोऽपि ग्रन्थः असर्वज्ञदुर्ज्ञेयतामा-पेति अहो प्रतिपादनचातुरीति चेन्मैवम् । पदार्थविशिष्टान्यत्वमेकत्वम् । वैशिष्ट्यं च स्वभिन्नत्व स्ववृत्तिपदार्थविभाजकोपाधिमत्त्वोभयसंबन्धेन । अथवा स्वेतरावृत्तिपदार्थविभाजकोपाधिमत्त्वमेकत्वम । यद्वा पदार्थ-विभाजकोपाधिवृत्तित्वमेकत्वम् । वृत्तित्वं च स्वनिष्ठावच्छेदकताकप्रति-योगिताकभेदवत्त्वसंबन्धावच्छिन्नम् । स्वनिष्ठावच्छेदकता च स्वेतर-

वृत्तित्वसंबन्धावच्छिन्ना । यत्र पदार्थविभाजकोपाधिवृत्तित्वं विवक्षितं तत् स्वपदग्राह्यम् । तथाच समवायत्वरूपपदार्थविभाजकोपाधेः समवायरूपस्वस्मादितरवृत्तित्वाभावेन स्वेतरवृत्तित्वसंबन्धेन समवायत्वरूपपदार्थविभाजकोपाधौ समवायवान्नेति प्रतीतिसाक्षिकभेदस्य सत्त्वात् । स्वेतरवृत्तित्वसंबधावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व संबन्धेन समवायत्वरूपपदार्थविभाजकोपाधिवृत्तित्वस्य समवाये सत्त्वाल्लक्षणसमन्वयः । अत्र गगनत्वादिरूपद्रव्यविभाजकोपाधिवृत्तित्वस्योक्तसंबन्धेन गगनादौ सत्त्वादतिव्याप्ते समवायेऽभावादसंभवस्य च वारणायोपाधौ पदार्थविभाजकत्वोत्कीर्तनम् । एवमेव तच्चैकमित्यादिस्थले गगनादिगतैकत्वानि पदार्थपदस्थाने द्रव्यपदं निवेश्य द्रव्यविशिष्टान्यत्वं स्वेतरावृत्तिद्रव्यविभाजकोपाधिमत्त्वम् । उक्तसंबन्धेन द्रव्यविभाजकोपाधिवृत्तित्वमिति रीत्या परिष्करणीयानीति कृतबुद्धयो विदांकुर्वन्तु ।

## ॥ रूपरहितस्पर्शवान्वायुः ॥

नन्वस्य लक्षणस्य घटादावतिव्याप्तिः । तत्र "उत्पन्नं द्रव्यं क्षणमगुणमक्रियं च तिष्ठती"ति न्यायादाद्यक्षणावच्छेदेन रूपराहित्यस्य द्वितीय क्षणावच्छेदेन स्पर्शवत्त्वस्य च सत्त्वात् । यद्यप्येकक्षणावच्छेदेनोभयवत्त्वं निवेश्यातिव्याप्तिर्वार्यत इति शक्यते वक्तुम् । तथापि प्राथमिको य एकक्षणः द्वितीयो य एकक्षणः तदवच्छेदेन घटे उभयोः सत्त्वेनातिव्याप्तिर्दुर्वारैवेति चेन्न । रूपाभावनिष्ठाधेयताविशिष्टस्पर्शनिष्ठाधेयतानिरूपकत्वस्य लक्षणत्वेनोक्तौ दोषाभावात् । आधेयतायामाधेयतावैशिष्ट्यं च स्वावच्छेदकक्षणावच्छिन्नत्वस्वनिरूपकनिरूपितत्वोभयसंबन्धेन । घटा-

दिस्पर्शनिष्ठाधेयतायाश्च घटनिरूपित रूपाभावनिष्ठाधेयतावैशिष्ट्यस्य स्वावच्छेदकक्षणावच्छिन्नत्वाभावेनाभावान्नातिव्याप्तिः। अथवा रूपवदवृत्तिस्पर्शवत्त्वं लक्षणम्। अधुना मूलस्थरूपरहितपदस्य रूपासमानाधिकरणमर्थः। घटादौ च स्पर्शस्य रूपवद्वृत्तित्वेन रूपवदवृत्तिस्पर्शाभावान्नातिव्याप्तिः। अथात्र लक्षणेऽसंभवः। वायुर्गुणवानिति प्रमासद्भावाद्वायौ गुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणता विद्यते साचाधेयता रूपनिष्ठा। सामान्यधर्मावच्छिन्नस्याधेयत्वादेस्सामान्याश्रययावद्व्यक्तिवृत्तित्वाभ्युपगमात्। अन्यथा न्यूनवृत्तित्वेन गुणत्वादिसामान्यधर्मस्यानवच्छेदकत्व प्रसङ्गात्। तथाच रूपनिष्ठाधेयतापदेन गुणत्वावच्छिन्नां तामुपादाय तन्निरूपिताधिकरणत्वस्य वायौ सद्भावेन वायवीयस्पर्शो रूपवद्वृत्तिरेवासीदिति रूपवदवृत्तिस्पर्शवत्त्वं वायौ नास्तीति। रूपवत्त्वं नाम। रूपनिष्ठाधेयतानिरूपिताधिकरणतावत्त्वम्। आधेयता च रूपत्वावच्छिन्ना विवक्षिता। तथाच गुणत्वावच्छिन्नां तामुपादायोक्तासंभवस्य नावकाश इति वाच्यम्। जन्यमात्रं कालोपाधिरिति नियमात् वायौ कालिकसंबन्धेन रूपसद्भावात् रूपत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः अपि वायौ सत्त्वेनोक्तासंभवस्य दुर्वारत्वात्। नच रूपत्वावच्छिन्नाधेयतायां समवायसंबन्धावच्छिन्नत्वनिवेशात्कालिकसंबन्धावच्छिन्नाधेयतामादाय नासंभव इति वाच्यम्। एवमपि जन्यमात्रस्य कालोपाधित्वेन स्पर्शे रूपत्वस्य कालिकसंबन्धेन सत्त्वात् रूपत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधेयतापदेन स्पर्शनिष्ठतादृशाधेयतामादाय तन्निरूपिताधिकरणत्वस्य वायौ सत्त्वेनोक्तदोषानुद्धारात। नच जन्यमात्रस्य

कालोपाधित्वानङ्गीकारान्नोक्तदोष इति वाच्यम् । एवमपि "क्रियामात्रं कालोपाधि"रित्यस्मिन्नविवादात् क्रियायां कालिकसंबन्धेन रूपत्वसद्भावा-द्रूपत्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधेयतापदेन क्रियानिष्ठां तामादाय तन्निरूपिताधिकरणत्वस्य वायौ सत्त्वादसंभवो दुर्वार एवेति चेन्न - आधेयतायां रूपनिष्ठत्वनिवेशात् क्रियानिष्ठां तामुपादाय नोक्तदोषाव काशः। आधेयतायां रूपनिष्ठत्वोक्त्या रूपत्वनिष्ठावच्छेदकतायां समवाय-संबन्धावच्छिन्नत्वस्य विवक्षणात्कालिकसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छे-दकताकक्रियानिष्ठाधेयताया न संग्रहः । अथैवमपि रूपवत्त्वांशे ग्रंथ-न्तरविवक्षया प्रतिपादितासंभवदोषासंभवेऽपि तादृशरूपवदवृत्तिस्पर्शवत्त्वं गगनेऽप्यस्तीत्यतिव्याप्तिः। तथाहि स्पर्शवत्त्वं नाम स्पर्शनिष्ठाधेयतानि-रूपिताधिकरणत्वम् । गगने च गुणवदितिप्रतीतिसाक्षिकगुणत्वावच्छि-न्नाधेयतां स्पर्शनिष्ठामादाय तन्निरूपिताधिकरणत्वसत्त्वात् । गुणत्वा-वच्छिन्नाधेयतायाः स्पर्शनिष्ठत्वं च पूर्वमेवोपपादितप्रायमिति नात्र पुनः प्रपंच्यते । स्पर्शत्वावच्छिन्नत्वं विवक्षित्वोक्तदोषवारणेऽपि कालिकसंबन्धेन स्पर्शत्वस्य कालोपाधौ सत्त्वेन स्पर्शत्वावच्छिन्नकालिकसंबन्धावच्छिन्ना-धेयतानिरूपिताधिकरणत्वं काल इत्यतिव्याप्तिः। आधेयतायां समवाय-संबन्धावच्छिन्नत्वं निवेश्य तद्वारणे स्पर्शत्वं विषयतासंबन्धेन ज्ञाने ज्ञानं च समवायेनात्मनि विद्यत इति स्पर्शत्वावच्छिन्नसमवायसंबन्धावच्छिन्ना-धेयतापदेन ज्ञाननिष्ठां तामुपादायात्मन्यतिव्याप्तिः। विषयतायाः वृत्त्य-नियामकत्वे ज्ञानस्य जन्यत्वेन तत्र कालिकसंबन्धेन स्पर्शत्वं विद्यत इत्युक्त एव दोषः। जन्यमात्रस्य कालोपाधितानभ्युपगमे ज्ञाने कालिकेन

स्पर्शत्वाभावेऽपि क्रियायां कालिकेन स्पर्शत्वसत्त्वात् तस्याश्च समवायेन मनसि सत्त्वात्स्पर्शत्वावच्छिन्नाधेयतापदेन क्रियानिष्ठां तामुपादाय मनस्य-तिव्याप्तिरिति। मैवम्। स्पर्शनिष्ठत्वस्य स्पर्शत्वनिष्ठावच्छेदकतायां समवाय-संबन्धावच्छिन्नत्वतात्पर्यकस्य विवक्षणेनोक्तसकलदोषवारणसंभवात्। अथ समवायसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकताकसमवायसंबन्धावच्छि-न्नाधेयतानिरूपिताधिकरणतावदवृत्तिस्पर्शत्वनिष्ठसमवायसंबन्धावच्छिन्ना-वच्छेदकताकसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वमितिप-रिष्कृतलक्षणस्य स्पर्शेऽतिव्याप्तिः। तथाहि। स्पर्शनिष्ठाधेयतायाः स्पर्शोऽधि-करणं अधिकरणता स्पर्शे सा चाधेयतारूपाधेयनिरूपिता भवतीति। मैवम्। तादृशाधेयतानिरूपकाधिकरणत्वस्य लक्षणत्वेन विवक्षितत्वात्। तथाचाधि-करणताधेयतयोः परस्परं निरूप्यनिरूपकभावः। आधेयाधिकरणतयोस्तु नैवम्। किंनामाऽऽधेयनिरूपितैवाधिकरणता। अधिकरणतानिरूपकमेवाऽऽ-धेयमिति। तथाच स्पर्शनिष्ठाधेयतायाः आधेयरूपत्वेन तन्निरूपितैवाधिकरण-ता स्पर्शे न तन्निरूपिकेति स्पर्शे नातिव्याप्तिः। अथवा स्पर्शनिष्ठाधेयतानि-रूपिताधिकरणतास्थाने तादृशाधेयताविशिष्टाधिकरणता निवेश्यते। वैशिष्ट्यं च स्वनिरूपितत्वस्वनिष्ठाधेयत्वानिरूपितत्वोभयसंबन्धेन। स्पर्शनिष्ठाधि-करणतायामाधेयतानिष्ठाधेयतानिरूपितत्वस्यैव सत्त्वेनोभयसंबन्धेनाऽऽधेय-ताविशिष्टत्वाभावान्न स्पर्शेऽतिव्याप्तिः। ईदृशैव रीतिः पूर्वोत्तरलक्षणे-ष्वप्यतिव्याप्तिवारकत्वेनानुसन्धेयेति संक्षेपः। अथ रूपवदवृत्तिस्पर्शव-त्त्वस्योत्पन्नविनष्टवाय्वाव्याप्तिरिति चेत् रूपासमानाधिकरणस्पर्शसमाना-धिकरणजातिमत्त्वे तात्पर्येण दोषाभावात्। नन्वत्र कालिकसंबन्धेन

कालादौ तादृशजातिमत्त्वमादायातिव्याप्तिवारणाय समवायेनेति विवक्ष-णीयम् । तथाचान्यतरत्वादिधर्ममादाय दोषासंभवेन जातिपदं व्यर्थमिति चेत् अत्र केचित् । तादृशसमयावसंबन्धतात्पर्यग्राहकं तत्पदमित्याहुः । तच्चिन्त्यम् । लक्षणघटकपदानां दोषवारकत्वेनैव सार्थक्यनियमात् । परे तु समवायेन तादृशवायुगगनसंयोगमादाय गगनेऽतिव्याप्तिवारणाय जातिपदमिति प्राहुः । एवं सर्वत्र दोषत्रयवारकत्वेन विशेषणानि नि-वेश्य लक्षणानि परिष्करणीयानीति नोत्तरत्रैतादृशी रीतिराद्रियत इति । अथात्र किंचित्प्रसङ्गान्निरूप्यते । केयमतिव्याप्तिर्नाम किंच तल्लक्ष्यम् । ननु कः सन्देहः । लक्ष्यालक्ष्यवृत्तित्वमतिव्याप्तिः । गोर्लक्षणकथनद-शायां द्रव्यत्वं तल्लक्ष्यमिति चेत् अस्ति महान् सन्देहः । अतिव्याप्तत्वेन प्रसिद्धश्रृंगित्वपरित्यागे बीजाकथनात् । नच यावल्लक्ष्यवृत्तित्वे सत्य-लक्ष्यवृत्तित्वस्य तदर्थत्वेन श्रृंगित्वे तदभावात । यावल्लक्ष्यान्तःपातिव-त्सगवि उत्पन्नविनष्टगवि च श्रृंगित्वाभावेन श्रृंगित्वस्य परित्यागात् । नचोत्पन्नविनष्टा गौरेव नास्ति वत्सायां गवि च यदा कदाचित् श्रृंगित्वं वर्तत एवेति वाच्यम् । तथासति उत्पन्नविनष्टघटादावव्याप्ति-वारकतया कृतस्य जातिघटितलक्षणस्य बहुग्रन्थेषु दृश्यमानस्य गलहस्ति-तत्वापातेन महदसमंजसं स्यादिति वाच्यम । तर्हि बहुषु ग्रन्थेषु पक्ष-पाती भवान् बहुकोशेषु दृश्यमानस्य श्रृंगित्वस्य लक्ष्यत्वेन परित्यागे असामंजस्यं किमिति न मनुते । किंच लक्ष्यालक्ष्यवृत्तित्वमित्यत्र याव-ल्लक्ष्यवृत्तित्वमर्थं, स्वयमेवाङ्गीकृत्य सिद्धश्रृंगित्वासिद्धद्रव्यत्वयो. परि-त्यागस्वीकारयोरकौशलव्यंजकत्वादिति चेदुच्यते । यावल्लक्ष्यवृत्तित्व-

रूपोऽर्थोऽवश्यमभ्युपेयः । अन्यथा लक्ष्यतावच्छेदकसमनियतत्वमिति दीपिकास्थलक्षणलक्षणव्याख्यानावसरे व्यापकत्वमात्रोपादानेऽतिव्याप्ते अतिव्याप्तिरिति वदतो नीलकण्ठस्य वचनविरोधापातात् । अपि-चातिव्याप्तं नाम व्याप्तमतिक्रम्य वर्तमानं तच्च व्याप्तसाक्षादिमत्त्वाद्य-पेक्षयाऽधिकदेशवृत्तिरूपमिति । अतिव्याप्तिशब्दार्थोऽप्युक्तरीत्या याव-ल्लक्ष्यवृत्तित्वघटित एव । तथाच यावल्लक्ष्यवृत्तित्वाभावात् शृंगित्वं परित्यज्य द्रव्यत्वमूरीकृतमिति । नन्वेवंसति तत्रैव दीपिकायामति-व्याप्तेलक्ष्यनिरूपणावसरे यथा शृंगित्वमित्युक्तेः का गतिः प्रदर्शयिष्यते भवनेति चिरं विमृशन्तोपि वयं न खलु तत्वमत्र निर्णेतुं प्रभवामः। किंच सिद्धशृंगित्वपरित्यागे किं बीजमित्यस्यानुत्तरितत्वात । नच नील-कण्ठवचनविरोध एव बीजमिति वाच्यम् । यस्य कस्यचित् ग्रन्थकृत उक्तिविरोधापेक्षया मूलकारोक्तिविरोधस्य बलीयस्त्वेन पूर्वोक्त बीजस्य विचारासहत्वादिति चेदत्र कश्चित् । दीपिकाकारस्य वचन-मपरामर्शमूलकमित्याह । तच्चिन्त्यम् । तस्याज्ञत्वप्रकटनापेक्षया स्वस्यै-वाज्ञताप्रकटनं वरमिति । वस्तुतस्तु शृंगित्वमप्यतिव्याप्तेर्लक्ष्यं भवितु-मर्हति । नच पूर्वोक्तदोषः । व्यापकत्वस्यापि सत्त्वात् । तथाहि गोः शृंगित्वं लक्षणमित्यभिदधतो यदि संयोगसमवायादिः लक्षणताघटक-संबन्धत्वेनाभिमतः स्यात् स्यात्तदोक्तदोषः । नचैवम् । स्वसमानाधिकर-णजातिमत्त्वं लक्षणताघटकसंबन्धः । अनेन च संबन्धेन शृंगित्वमपि व्यापकं भवति । शृंगित्वसमानाधिकरणद्रव्यत्वपशुत्वादिजातिमत्त्वस्यो-त्पन्नविनष्टादिगवि सत्त्वात् । नन्वेवं सति ईदृशसंबन्धेनैकशफवत्त्वनील-

रूपवत्त्वादिकमपि लक्ष्यतावच्छेदकव्यापकं भवतीति तदप्यतिव्याप्तं स्यादिति न्यायशास्त्रपाण्डित्यं सम्यक् प्रकाशितं स्यादिति चेदन्यत्राभिप्रायविशेषः । स्ववृत्तिजातिमत्त्वं लक्षणताघटकसंबन्धत्वेनाभिमतम् । जातौ स्ववृत्तित्वं च स्वसमानाधिकरणलक्ष्यतावच्छेदकविशिष्टत्वसंबन्धेन । वैशिष्ट्यं च स्वसमानाधिकरणत्वस्वाभावसमानाधिकरणत्वोभयसंबन्धेन । प्रथमसंबन्धनिवेशादेकशफवत्त्वादावतिव्याप्तिनिरासः । द्वितीयसंबन्धनिवेशान्नीलरूपवत्त्वादावतिव्याप्तिनिरासः । अनेन संबन्धेन गोत्वव्यापकत्वरूपयावल्लक्ष्यवृत्तित्वस्य शृंगित्वादन्यत्र नीलरूपादावभावात् । यन्नीलरूपे गोत्वसमानाधिकरणत्वं तत्र न तदभावसामानाधिकरण्यम् । अन्यस्मिन्न गोत्वसामानाधिकरण्यम् । रूपस्यानुगतत्वादिति ध्येयम् । अथवा स्ववृत्तिजातिमत्त्वं संबन्धः । जातौ स्ववृत्तित्वं च स्वसमानकालीनलक्ष्यतावच्छेदकविशिष्टत्वसंबन्धेन । लक्ष्यतावच्छेदकवैशिष्ट्यं च स्वसमानाधिकरणत्वस्वाभावसमानाधिकरणत्वस्वाभावसमानाधिकरणाभावप्रतियोगित्वैतत्त्रितयसंबन्धेन । अत्र पूर्वापेक्षयाऽधिकस्य तृतीयसंबन्धस्य निवेशात्प्रमेयत्वादेरतिव्याप्तिलक्ष्यतया क्वाप्यप्रदर्शितत्वेन तस्याप्युपपत्तिः । एवमन्यत्रापि परैरननुशीलिताः परिष्कारस्य पंथानो द्रष्टव्या इत्यलमतिविस्तरेण ।

## ॥ त्वगिन्द्रियं सर्वशरीरवृत्ति ॥

सर्वं शरीरस्य सर्वशरीरमिति प्रथमातत्पुरुषः । नतु कर्मधारयः । तथासति शरीरे सर्वावयवावच्छेदेन त्वगिन्द्रियसत्त्वासिद्धिप्रसङ्गात् । शरीरपदस्यैवावयवपरत्वे लाक्षणिकत्वप्रसङ्गात् । सर्वपदस्य यावदवयवोऽर्थः ।

षष्ठ्यर्थः आरंभकत्वम् । तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्यान्वयः । आरंभकत्वस्याऽऽश्रयतासंबन्धेन सर्वपदार्थेऽन्वयः । तथाच शरीरनिरूपितारंभकत्वाश्रययावदवयवः सर्वशरीरशब्दार्थः । तथाच यावच्छरीरावयववृत्तित्वलाभेन विवक्षितसिद्धिः ।

॥ शरीरान्तःसंचारी वायुः प्राणः ॥

शरीरस्यान्तः संचरतीति शरीरान्तःसंचारी किंचिदवच्छिन्नाकाशमंत शब्दार्थः । शरीरस्येत्यत्राभेद षष्ठ्यर्थ अन्त पदार्थैकदेशे किंचिदर्थेऽन्वेति । सचारपदार्थ नानादेशसंयोगानुकूलक्रिया । आश्रयतावान् णिनिप्रत्ययार्थः । अन्तःपदार्थस्याधेयतासंबन्धेन संचारपदार्थघटकसंयोगेऽन्वयः । तथाच प्राण. शरीराभिन्नकिंचिदवच्छिन्नाकाशनिष्ठनानादेशावच्छिन्नसंयोगानुकूलक्रियानिरूपिताश्रयतावदभिन्नवाय्वभिन्न इति विशिष्टबोधः ।

॥ स चैकोऽप्युपाधिभेदात्प्राणापानादिनानासंज्ञां लभते ॥

लभधात्वर्थः प्राप्तिः । सा च वाचकतासंबन्धावच्छिन्नाधेयतारूपा । संज्ञां द्वितीयार्थः अधिकरणता । आख्यातार्थ आश्रयत्वम् । प्राणापानादीत्यस्य तादृशानुपूर्वीविशिष्टोऽर्थः । संज्ञापदस्य आनुपूर्वीविशेषावच्छिन्नसंकेतीयविशेष्यतावानर्थः । तथाच प्राणापानाद्यानुपूर्वीविशिष्टाभिन्नविभिन्नसंज्ञानिष्ठाधिकरणतानिरूपितवाचकत.संबन्धावच्छिन्नाधेयता निरूपिताश्रयतावान् प्राण इति महावाक्यार्थबोधः ।

॥ शब्दगुणकमाकाशम् ॥

अत्र गुणपदं शब्द एवाकाशे विशेषगुण इति द्योतनायेति बहवः ।

शब्दस्य द्रव्यत्वाभ्युपगन्तृमतनिराकरणाय तदिति वयम् । आकाशसिध्यर्थं च कप्रत्ययः । नेन च प्रत्ययेनाश्रयाश्रयिभावबोधनाच्छब्दरूप-गुणाश्रयीभूतमाकाशरूपं किंचिद्द्रव्यमितरेषां बाधारिसध्यति । सिद्धि-प्रकारश्च मुक्तावल्याद्युक्तो द्रष्टव्यः ।

॥ तच्चैकं विभु नित्यं च ॥

अत्र विभ्वेकं नित्यमित्याद्यन्यक्रमेण किमिति नोक्तमित्याशंकां स्वतन्त्रेच्छस्येत्यादि नियमबलात्केचित्समादधते । वस्तुतस्तु व्याप्यमेक-त्वादिकं "व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः पर"मिति वचनबलात्प्रथ-मतो निर्दिष्टवान् ग्रन्थकारः । व्याप्यव्यापकभावश्चेत्थम् । आकाशं विभु सर्वदेशावच्छेदेनोपलभ्यमानगुणाश्रयत्वे सति एकत्वात् व्यतिरेकेण घटा-दिवत् । अत्र च वायौ व्यभिचारवारणाय हेतौ विशेष्यभागः । समवाया-दौ व्यभिचारवारणाय विशेषणभागः । नचैकत्वमात्रबोधकमूलात्कथं वि-शिष्टहेतुलाभ इति वाच्यम् । तच्चेत्यत्र विशेषणसमुच्चायकचशब्दसद्भावेन विशिष्टहेतुलाभसंभवात् । एवं सिद्धं विभुत्वं हेतूकृत्य नित्यत्वं साध-नीयम् । यथा । आकाशं नित्यं विभुत्वादात्मवदिति । अत्र च दृष्टा-न्तसमुच्चायको नित्यं चेति चशब्दः । तथाच नित्यत्वं विभुत्वस्य तत्पति चैकत्वस्य हेतुत्वेन पूर्वपूर्वनिर्देशः सङ्गतः । उत्तरत्र च कालादौ ईदृशव्याप्यव्यापकभावासंभवेऽपि प्रथमस्वीकृतक्रमपरित्यागे बीजाभा-वादेव तथैव निर्देशः कृत इत्यवधेयम् । अत्रैकत्वं पूर्वनिरुक्तम् । विभुत्वं च सर्वमूर्तद्रव्यसंयोगित्वम् । अत्र घटादावतिव्याप्तिवारणाय सर्वपदम् । सर्वान्तःपातिगुणादिसंयोगाप्रसिध्या असंभववारणाय द्रव्यपदम् । पुनः

सर्वद्रव्यान्त पातिविभुद्रव्यसंयोगानङ्गीकारात्स एव दोष इति मूर्तपदम् । क्रियावन्मूर्तम् । इत्त च मूर्तपदे मूर्त द्रव्यमेवेति स्वरूपकीर्तनपरं द्रव्यपदम् । अथ किं सर्वमूर्तद्रव्यसंयोगित्वं नाम । न तावत् सर्वमूर्तद्रव्यप्रतियोगिको यः संयोगस्तद्वत्त्वम् । तादृशैकसंयोगाप्रसिद्धेः । न तावत्तन्मूर्तप्रतियोगिकसंयोगवत्त्वे सत्येतन्मूर्तप्रतियोगिकसंयोगवत्त्वे सत्यन्यमूर्तप्रतियोगिकसंयोगवत्त्वादिरूपं तत् । ईदृशस्यासर्वज्ञदुर्ज्ञेयतया शिष्यबोध्यके ग्रन्थेऽनिवेश्यतापत्तेः । नापि मूर्तत्वव्यापकत्वम् । गगनाभावस्य केवलान्वयित्वेन गगने मूर्तत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन तदप्रतियोगित्वरूपव्यापकत्वाभावेनासंभवापत्तेः । द्रव्यत्वादावतिव्याप्त्यापत्तेश्च । द्रव्यत्वादावपि मूर्तत्वव्यापकत्वानपायात् । मैवम् । स्वानुयोगिकसंयोगप्रतियोगित्वसंबन्धेन व्यापकतायाः समवायेन व्याप्यतायाश्च विवक्षणेनोक्तदोषाभावात् । तथाहि । गगनं सर्वमपि मूर्तं संयुनक्तीति स्वानुयोगिकसंयोगप्रतियोगित्वसंबन्धेन मूर्तत्वसमानाधिकरणाभावीयप्रतियोगिता न गगनादावपि तु घटादावेवेति नासंभवः । द्रव्यत्वादौ चोक्तसंबन्धेन तादृशप्रतियोगितैवास्तीति नातिव्याप्तिः । नन्वेवमप्यसंभवो दुर्वारः । गगनमूर्तयोराधाराधेयभावाभावेन स्वानुयोगिकसंयोगप्रतियोगित्वसंबन्धेनापि गगनस्य मूर्ते वृत्तेरसंभवादिति चेत् अत्र प्रष्टव्यम् । किमियमाशंका आधाराधेयभाव एव प्रतियोग्यनुयोगिभाव इत्यभेदाभिप्रायेण उत प्रतियोग्यनुयोगिभावस्तद्व्याप्य इत्याशयेन वा । नाद्यः । तादात्म्येन घटसंबद्धो घटः घटस्य स्वरूपमित्यादौ घटप्रतियोगिकतादात्म्यानुयोगी घटः घटानुयोगिकाभेदप्रतियोगिस्वरूपमित्यादिप्रतीतेः प्रति-

योग्यनुयोगिभावविषयिण्या आधाराधेयभावाविषयिण्याश्च दर्शनेन तयो-रैक्यासंभवात् । अत्रैव व्यभिचारान्न द्वितीयोऽपि । किंच गगनसंबन्धित्वं मूर्ते तावत्सार्वजनीनम् । तत्र प्रतियोग्यनुयोगिभावातिरिक्तं संबन्धित्वं पारिभाषिकमिति यद्युच्यते तर्हि तदप्याधाराधेयभावनियतमित्याधाराधेयभावाभावे पूर्ववत्तस्यापि प्रत्याख्यानसंभवेनाधाराधेयभावविरहस्थले संबन्धित्वपदार्थस्यात्यन्तमलीकत्वापत्तेः । अथैवमप्यास्तां प्रतियोग्यनु-योगिभावोऽतिरिक्तः । तथापि आधाराधेयभावस्थले आधारोऽनुयोगी आधेयस्तु प्रतियोगीतिवत्प्रकृते नियामकाभावेन गगनमनुयोगि इतर-च्चेतरदिति विनिगन्तुमशक्यत्वेन स्वानुयोगिकसंयोगप्रतियोगित्वसंबन्धेन गगनं मूर्ते अस्ति वा स्वप्रतियोगिकसंयोगानुयोगित्वसंबन्धेन मूर्ते गगनमस्ति वेति निर्णयाभावेन लक्षणस्य अज्ञानरूपासिद्धिरिति चेन्मै-वम् । यत्क्रियया यत्संयोगः समजनि तत्क्रियाधिकरणं प्रतियोगि अन्य-दनुयोगीति प्रतियोग्यनुयोगिभावे क्रियाधिकरणत्वतदभावरूपनियामक-भावेन निष्क्रिये च गगने कमपि संयोगं प्रति प्रतियोगित्वासंभवेन स्वानुयोगिकसंयोगप्रतियोगित्वस्यैव संबन्धत्वनिश्चयेन लक्षणासिद्धेरयो-गात् । नचोक्तस्यापि नियामकत्वं नोपपद्यते । तथात्वे मल्लमेषादिसंयोगे उभयक्रियाजन्ये प्रतियोग्यनुयोगिभावस्यानियतत्वापातादिति वाच्यम् तत्र क्रियाद्वयजन्यस्य संयोगद्वयस्याङ्गीकारान्नियमनोपपत्तेरित्यलम् ।

## ॥ अतीतादिव्यवहारहेतुः कालः ॥

अतीतादिव्यवहारहेतुत्वं कालस्य लक्षणम् । अत्रचादिपदस्य वर्तमानादिकालाव्याप्तिवारकतया सार्थक्यं यथाश्रुते वक्तव्यम् । तच्चानुप-

पन्नमिवाभाति । आदिपददानोत्तरं तादृशव्यवहारत्रयहेतुत्वलाभेन कस्यापि कालस्य तादृशव्यवहारत्रितयहेतुत्वासंभवेनासंभवात् । यद्यपीयमाशङ्का तादृशव्यवहारान्यतमहेतुत्वं व्यवहारहेतुत्वान्यतमं वा लक्षणत्वेन विवक्षित्वा शक्यते वारयितुं । तथापि सर्वव्यवहारहेतुज्ञाने ताल्वोष्ठपुटसंयोगादौ कार्यसामान्यकारणे दिशि चातिव्याप्तिः । किंच सत्यपि धने धनित्वज्ञानविरहदशायां धनीतिव्यवहाराभावेनासत्यपि धने सति च धनित्वज्ञाने धनीतिव्यवहारभावेनान्वयतो व्यतिरेकतश्च व्यभिचारेण न व्यवहर्तव्यतावच्छेदकं व्यवहारकारणमपितु तज्ज्ञानमेवेति व्यवहर्तव्यतावच्छेदकज्ञानविधया कालज्ञानस्य कारणत्वेऽपि कालस्यातथात्वाल्लक्षणासंभव इति केचित् मूलमुन्मूलयन्ति । अत्रेदं समाधानमवधेयम् । अतीतादिव्यवहारहेतुत्वं कालस्य लक्षणम् । वन्हेः धूमो हेतुः घटस्य दण्डो हेतुरिति द्विविधव्यवहारबलात् हेतुत्वमपि ज्ञापकत्वत्वकारकत्वत्वाभ्यां द्विविधमित्यवसीयते । तत्र प्रकृते किमुपादेयमित्याकांक्षायां कारकत्वरूपस्य पूर्वपक्षिणैवातिव्याप्त्यसंभवाभ्यां दूषितत्वेन व्यवहर्तव्यतावच्छेदकज्ञानस्य कारणत्वोपपादनेन प्रकृतेऽपि ज्ञापकत्वरूपहेतुत्वस्य मूलार्थतया विवक्षणे दोषाभावात् । सत्यपि कारणादिपदे हेतुपदमुपाददानो ग्रन्थकृदपीममेवार्थमभिप्रैति । ज्ञापकत्वं च जनकज्ञानविषयत्वमिति तादृशव्यवहारजनकज्ञानविषयत्वस्य काले सत्त्वेनासंभवासंभवात् । ज्ञानताल्वोष्ठपुटसंयोगदिगादीनां तु स्वरूपसतामेव कारणत्वेन तादृशव्यवहारजनकत्वेऽपि जनकज्ञानविषयत्वाभावान्नातिव्याप्तिरिति किमनुपपन्नम् । अथेदमनुपपन्नम् । अतीतो घटः जातिश्च समवेता इत्यादिसमूहालंबनतादृश-

व्यवहारजनकज्ञानीयविषयताया जात्यादौ विद्यमानतया जात्यादावतिव्याप्ति । नच तादृशज्ञानं न तादृशव्यवहारजनकम् । अधिकन्त्विति न्यायेन तज्ज्ञानस्याधिकविषयकत्वेऽपि न जनकत्वं निन्होतुं शक्यत इति । मैवम् । तादृशव्यवहारजनकतावच्छेदकविषयताश्रयत्वस्य लक्षणत्वेन सामंजस्यात् । जातिनिष्ठतादृशसमूहालंबनज्ञानीयविषयता तु न तादृशव्यवहारजनकतावच्छेदिका । कथमिति चेत् । अस्य ज्ञानस्यातीतादिव्यवहारजनकत्वे न जातिविषयकत्वं प्रयोजकम् । जातिविषयकत्वे सत्यपि जातिरित्याकारकज्ञानादतीतादिव्यवहारानुत्पत्ते. । अपितु कालविषयकत्वं प्रयोजकमिति कालनिष्ठविषयतैवावच्छेदिका भवितुमर्हतीति न जातावतिव्याप्तिः । नन्वेवमप्यतीतो घट इति व्यवहारे व्यवहर्तव्यतावच्छेदककालस्यव व्यवहर्तव्यघटस्यापि ज्ञानं कारणमिति घटादावतिव्याप्तिरिति चेत् । तादृशव्यवहारजनकतावच्छेदकीभूतप्रकारतावत्त्वं लक्षणमिति परिकल्प्य । नचैवं घटत्वेऽतिव्याप्तिः । तस्यापि तज्ज्ञाने प्रकारत्वादिति वाच्यम् । धर्मितावच्छेदकताभिन्नत्वेन प्रकारतायाः विशेषणात् अथवा तदपि न देयं । घटत्वादेरसार्वत्रिकत्वेन जनकतानवच्छेदकत्वात् । तथाचातीतादिव्यवहारान्यतमजनकतावछेदकप्रकारतावत्त्वं पूर्वोक्तरीत्या प्रकारतान्यतमवत्त्वं वा कालस्य लक्षणमिति फलितम् । एवं सर्वाधारत्वं सर्वनिमित्तकारणत्वं च कालस्य लक्षणं ध्येयम् । ननु दिश्यतिव्याप्तिः । तस्या अपीदृशत्वात् । नच कालिकसंबन्धेन सर्वाधारत्वं निमित्तकारणत्वं च विवक्षितमिति वाच्यम् । कालिकसंबन्धेन सर्वाधारत्वस्य च दिश्यभावेनातिव्याप्तिवारणसंभवेऽपि कालिकसंबन्धेन कार्यसामान्यं

प्रति कालिकेन वा स्वाश्रयसंयुक्तसंयोगेन वा अदृष्टादेर्निमित्तकारणत्वेन तत्रातिव्याप्तेः । मैवम् । कालिकसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणताया विवक्षणेनातिव्याप्तेरभावात् । दिङ्निष्ठकारणतायाः कालिकसंबन्धावछिन्नकार्यतानिरूपितत्वाभावात् । अदृष्टादिकारणतायाश्च तादात्म्येनानवच्छेदात् तत्र तत्र नातिव्याप्तिः । अत्रेदमवधेयम् । कार्यत्वव्यापकत्वं कालस्य लक्षणम् । व्यापकत्वं च तादात्म्यसंबन्धावच्छिन्नस्वनिष्ठकारणतानिरूपितकालिकसंबन्धावच्छिन्नकार्यतासंबन्धेन । व्याप्यता स्वरूपसंबन्धेन । एतत्सूचनायैव च प्राक् कार्यतायां कार्यत्वावछिन्नत्वनिवेशः । अन्यथा तद्वैयर्थ्यापत्तेः । कृत्यन्तु पूर्ववदेव । एवं सर्वाधारत्वमित्यत्रापि सर्वनिष्ठाऽऽधेयतैका न प्रसिध्यतीति सर्वत्वव्यापकत्वं वक्तव्यम् । तत्र व्याप्यत्वं स्वरूपसंबन्धेन । व्यापकत्वं च स्वनिरूपितकालिकसंबन्धावच्छिन्नाधेयतासंबन्धेन । इत्यादिकं बहुतरमूहनीयम् । विस्तरभिया नेह तन्यते ।

## ॥ ज्ञानाधिकरणमात्मा ॥

अत्राधिकरणपदं कुत उपात्तमिति चेदत्र केचित् । व्यर्थं मदितिन्यायेन समवायेन ज्ञानवत्ताबोधकमिति । वयन्तु ब्रूमः । मुक्तात्मन्यव्याप्तिवारणाय तत् । मुक्तात्मनां शरीराभावेनाव्याप्यवृत्तिज्ञानस्यासंभवेऽप्यधिकरणस्वरूपाधिकरणतायाः व्याप्यवृत्ते सत्त्वेनादोषात् ।

## ॥ प्रतिशरीरं भिन्नः ॥

शरीरं शरीरं प्रतिशरीरमित्यव्ययीभावः । वीप्सा प्रत्यर्थः । सा च व्याप्तिः । "साकल्यवत्सजातीयव्याप्यत्वं वीप्सयोच्यते" इत्यभि-

धानात् । शरीर इत्यत्र शरीरपदस्य शरीरभेदोऽर्थः । वृत्तित्वं सप्तम्यर्थः । व्याप्तेर्निरूपकत्वसंबन्धेन भिन्नपदार्थैकदेशे भेदेऽन्वयः । तथाच शरीरभेदवृत्तिव्याप्तिनिरूपकभेदप्रतियोग्यात्मेति वाक्यार्थ । तथाचानेकशरीरव्याप्तिमानिति लभ्यते । अथवा प्रति शरीरमिति भिन्नं पदम् । शरीरमिति द्वितीयान्तं । "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" इति सूत्रेण लक्षणार्थकप्रतिपदयोगाच्छरीरपदोत्तरं द्वितीया । तथाच ज्ञानज्ञाप्यत्वरूपं लक्षणं प्रत्यर्थः । शरीरपदस्य शरीरभेदोऽर्थः । विषयत्वं द्वितीयार्थः । भिन्नपदस्य भेदप्रतियोग्यर्थः । तथाच शरीरभेदविषयकज्ञानज्ञाप्यभेदप्रतियोग्यात्मेति शाब्दबोधः । अनेनच आत्मानः अनेके प्रतिशरीरं भिन्नत्वात् मनोवत् । नचाप्रयोजकत्वं स्वरूपासिद्धिर्वा । आत्मानः परस्परं भिन्ना. विरुद्धधर्मवत्त्वात् जलानलवत् । अथवा चैत्रो मैत्राद्भिन्नः मैत्रवृत्तिदुःखानुसंधानरूपधर्मविरुद्धसुखानुसंधानरूपधर्मवत्त्वात् । यो यद्वृत्तिधर्मविरुद्धधर्मवान् स तस्माद्भिन्नः यथा जलवृत्तिशैत्यविरुद्धोष्णत्ववाननलो जलाद्भिन्नः । अथवा परिदृश्यमानेतरीरावच्छिन्नभोगवानात्मा तच्छरीरावच्छिन्नभोगवद्भिन्नः तच्छरीरावच्छिन्नभोगाभाववत्त्वात् व्यतिरेकेण तच्छरीरावच्छिन्नात्मवत् । अथवा एतच्छरीरं तच्छरीरावच्छिजीवभिन्नजीवावच्छेदकं तच्छरीरभिन्नशरीरत्वात् व्यतिरेकेण तच्छरीरवत् । नच बाल्ययौवनादिशरीरे योगिगृहीतशरीरे च परस्परं भिन्नत्वे सत्यपि विभिन्नजीवावच्छेदकत्वाभावाद्व्यभिचार इति वाच्यम् । एतच्छरीरविशिष्टशरीरत्वस्य हेतुत्वेन विवक्षणात् । शरीरवैशिष्ट्यं च स्वभिन्नत्वस्वसमानकालिकत्वस्वजनकयोगजधर्माजन्यत्वत्रितय-

संबन्धेन । बाल्यादिशरीरस्य समानकालिकत्वविरहात् योगिशरीरे च योगजधर्माजन्यत्वविरहात् अस्मदादिशरीरे च स्वभिन्नत्वविरहात् तत्र तत्र तत्तच्छरीरावच्छिन्नजीवभिन्नजीवावच्छेदकत्वविरहेऽपि न व्यभिचार इति। यद्वा भिन्नपदस्य भेदप्रतियोग्यबोधकत्वे शरीरपदस्य शरीरभेदाबोधकत्वे च भिन्नपदस्य भेदनिरूपिताश्रयतावानर्थः। शरीरपदस्यापि मुख्यं शरीरमेवार्थः। प्रत्यर्थो वीप्सा सा च व्याप्तिः। तस्याः निरूपकत्वसंबन्धेन भेदेऽन्वये व्यापकत्वं लभ्यते। तथाच शरीरव्यापकभेदनिरूपिताश्रयतावानिति पर्यवस्यति। भेदे शरीरव्यापकत्वं तादात्म्येन व्याप्यत्वं च स्वावच्छिन्नजीवनिष्ठप्रतियोगितानिरूपकत्वस्वभिन्नशरीरावच्छिन्नजीवनिष्ठानुयोगितानिरूपकत्वोभयसंबंधेनेति न कोऽपि दोषगन्धः (१)। यद्वा भेदस्य व्यापकत्वं पूर्ववत्तादात्म्येन। शरीरस्य व्याप्यत्वं च स्वावच्छिन्नानुयोगितानिरूपकत्वस्वभिन्नशरीरावच्छिन्नप्रतियोगितानिरूपकत्वैतदुभयसंबन्धेन (२)। अथवा शरीरस्य व्याप्यत्वं तादात्म्येन व्यापकत्वं च स्वानुयोग्यवच्छेदकत्वस्वप्रतियोग्यवच्छेदकशरीरभिन्नत्वोभयसंबन्धेन (३)। आहोस्वित् शरीरस्य व्याप्यत्वं पूर्ववत्तादात्म्येन। भेदस्य व्यापकत्वं च स्वप्रतियोग्यवच्छेदकत्वस्वानुयोग्यवच्छेदकशरीरभिन्नत्वैतदुभयसंबन्धेन (४)। सर्वत्र समन्वयप्रकारः स्वयमूह्यः। विस्तरभिया नेह प्रपंच्यते। अथ निरुक्तेषु कल्पेषु तृतीयचतुर्थयोर्भूताविष्टमैत्रशरीरे व्याप्तिभङ्गः। तथाहि। तादात्म्येन व्याप्यभूतं शरीरं यत्र यत्रेत्युक्तौ भूताविष्टमैत्रशरीरे। तत्र च स्वानुयोग्यवच्छेदकत्वस्वप्रतियोग्यवच्छेदकभिन्नत्वोभयसंबन्धेन भेदो नास्ति। कथमिति चेत् स्वं नाम मैत्रजीवे विद्य-

मानः भूतभेदः तदनुयोगी मैत्रः तदवच्छेकत्वं यद्यपि मैत्रशरीरेऽस्ति तथापि द्वितीयसंबन्धो नास्ति। स्वं भूतभेदः स्वप्रतियोगी पिशाचः। तदवच्छेदकमेव मैत्रशरीरं अतस्तद्भिन्नत्वं नास्तीति व्याप्त्यभावः। एवं चतुर्थकल्पेऽपि तादात्म्येन शरीरं यत्र तत्र पिशाचे विद्यमानः मैत्रभेदो नास्ति। यथा स्वं पिशाचवृत्तिभेदः स्वप्रतियोगी मैत्रः तदवच्छेदकत्वं अस्ति तथापि स्वं तादृशभेदः स्वानुयोगी पिशाचः तदवच्छेदकमेव मैत्र-शरीरमिति तद्भिन्नत्वं नास्तीति व्यभिचारः। न च पिशाचस्य विजातीय-वायवीयविभिन्नशरीरवत्त्वात् कथं तदवच्छेदकं मैत्रशरीरं। अन्यथा तस्य पृथक् शरीरवैयर्थ्यापातादिति वाच्यम्। यतो हि अवच्छेदकत्वं नाम भोगसाधनत्वं भोगश्च सुखदुःखान्यतरसाक्षात्कारः। तत्र दुःख-साक्षात्काराय पृथक् तच्छरीरं। सुखसाक्षात्काराय च मैत्रशरीरमपि भवितुमर्हति। अन्यथा तत्र पिशाचस्य प्रवेशेच्छाया एवानुपपत्तेः। अतो नोक्तानुपपत्तिः। न वा व्यभिचारः परिहृत इति। मैवम्। न ह्यस्माभिरात्मवृत्तिसर्वभेदानामेकस्मिन्नेव शरीरे व्याप्तिः प्रतिज्ञाता। येनैव-मुपलभेमहि। किन्तु शरीरव्यापकत्वं भेदस्योक्तम्। नाधुना व्यभिचारः प्रसज्यते। मैत्रशरीरे मैत्रवृत्तिपिशाचभेदस्य पिशाचवृत्तिमैत्रभेदस्य वोक्त-संबन्धद्वयेनासत्त्वेऽपि चैत्रभेदस्योक्तसंबन्धेनाबाधितत्वात् कथं व्यभिचार-प्रसक्तिः। अन्यथा किं पिशाचग्रस्तत्वचिन्तयाऽपि। मैत्रशरीर एव स्वानु-योग्यवच्छेदकत्वसंबन्धेन मैत्रप्रतियोगिकचैत्रवृत्तिभेदस्य स्वप्रतियोग्यव-च्छेदकत्वसंबन्धेन मैत्रवृत्तिभेदस्यासत्त्वेन व्यभिचारः कुतो न शङ्कित इत्यलम्। आत्मन्याकाशवत् विभुत्वसाधक एकत्वविशिष्टसर्वदेशावच्छे-

देनोपलभ्यमानगुणवत्त्वहेतुः नाभिमतः स्वरूपासिद्धिप्रसङ्गात् । अपि तु अन्यस्मादेव विभुत्वं साधनीयम् । तथाहि । आत्मा विभु परममहत्परिमाणवत्त्वात् गगनादिवत् । न च स्वरूपासिद्धिः । आत्मा परममहत्परिमाणवान् तदन्यपरिमाणशून्यत्वे सति परिमाणवत्त्वात् । यो यदन्यपरिमाणशून्यत्वे सति परिमाणवान् स तत्परिमाणवान् यथा संमत इति सामान्यतो वा गगनादिविशेषदृष्टान्तेन वा परिशेषात्तत्सिद्धेः । न च परिशेषे विशेष्यासिद्धिः । आत्मा परिमाणवान् द्रव्यत्वात् घटवत् । द्रव्यत्वं च आत्मा द्रव्यं गुणवत्त्वात् घटवत् । गुणवत्त्वं च गुणवत्त्वेन प्रमीयमाणत्वात् । प्रमा च घटमहं जानामि सुखादिकमनुभवामीत्याद्यनुभवसाक्षिका । विशेषणासिद्धिपरिहारस्तु । आत्मा नाणुः सर्वशरीरावच्छेदेनोपलभ्यमानसुखाद्याश्रयत्वात् व्यतिरेकेण परमाणुवत् । अप्रयोजकत्वशङ्कायान्तु सर्वशरीरावच्छेदेनोपलभ्यमानसुखाद्याश्रयत्वमेव न स्यादिति हेतूच्छित्तिरूपबाधकस्तर्क उन्नेयः । न च तेजसा आत्मनः शरीरे व्याप्त्यङ्गीकारेऽपीदमुपपद्यत इति अप्रयोजकता शंक्या । वेदान्तिमतवन्नैयायिकमते आत्मनो ज्ञानरूपत्वाभावेन दीपवत्प्रभया व्याप्त्ययोगात् । एवमात्मा न मध्यमपरिमाणः नित्यत्वात् परमाणुवत् । अत्राप्यप्रयोजकता न शंक्या । तथात्वे यन्मध्यमपरिमाणं तदनित्यमिति व्याप्तेरात्मनोऽप्यनित्यत्वापत्तेः । न चेष्टापत्तिः कृतहानाकृताभ्युपगमप्रसङ्गात् । जीवनादृष्टाभावापत्तेश्च । अन्यदीयादृष्टस्य अन्यकार्यकारित्वायोगाच्च । पूर्वानुभवाहितसंस्काराभावेनेष्टसाधनतास्मृत्यनुदयेन प्रवृत्त्यनुपपत्त्या एवं वदतो बालस्य शुष्ककण्ठतया मरणापत्तेश्चेति । अत्र बहवो बहुधा

वर्णयन्ति । तथाहि शरीरमेवात्मेति केचित् । तेषां मते गौरोऽहं कृष्णोऽहमित्याद्यनुभवः प्रमाणम् । तदुपोद्बलितानि चाहमिति पदं शरीरबोधकं शरीरनिष्ठधर्मावच्छिन्नबोधकपदसमानाधिकरणत्वात्, यद्यन्निष्ठधर्मावच्छिन्नबोधकपदसमानाधिकरणं तत्तस्य बोधकं यथा घटनिष्ठधर्मावच्छिन्नबोधकनीलादिपदसमानाधिकरणं, घटपदं घटबोधकम् । अत्रच सामानाधिकरण्यं द्विविधं विद्यते, विभिन्नप्रवृत्तिनिमित्तकानां शब्दानामेकस्मिन्नर्थे वृत्तिः समानविभक्तिकत्वं चेति, किंच शरीरं चेतनं शरीरत्वात् व्यतिरेकेण घटवदित्यादीनि साधकानि प्रमाणानि । इन्द्रियाण्येवात्मेति स्वतंत्राः । अत्र च शरीरस्य चैतन्यपक्षे योऽयं मृतशरीरादौ व्यभिचारः प्रदर्शयिष्यते स नास्तीत्यभिमान एव मानम् । श्वासोछ्वासावेवात्मेत्यपरे । अत्र किं तत्वमिति विचारणायामाद्य कल्पस्तावन्न शोभते । तथाहि । शरीरमात्मेति वदन् प्रष्टव्यो भवति । किं शरीरं पदार्थान्तरं वा पांचभौतिकं वा । नाद्यः पांचभौतिकत्वेन शतशो ह्यनुभूयमानस्य सहस्रशः श्रुतिपुराणादिषु गीयमानस्य कोटिधा कविभिर्वर्ण्यमानस्यानुपपत्तिप्रसङ्गात् । अतोऽभ्युपेयो द्वितीयः कल्पः । अस्मिन् पक्षे च प्रत्येकं पंचभूतेषु अदृश्यमानस्य चैतन्यस्य मिलितेऽपि शरीरे कथमुत्पत्तिरिति शङ्का दुरुद्धरा । अत्रच तन्मतानुयायिनः हरिद्रासुधयोः प्रत्येकमविद्यमानस्यापि रक्तिम्नो यथा संयोगविशेषात् मिलिते उत्पत्तिः एवमेव पंचभूतेष्वपि मिलितेषु संयोगविशेषाच्चैतन्योत्पत्तिरिति ब्रुवते । विषमोऽयमुपन्यासः । एवमापादयतस्तस्यानयैव चिन्तया कदाऽपि सति शरीरे मृतिर्न स्यादिति कुशला वयं तर्कयामः । यतो हि मिलिते उत्पन्नस्य रक्तिम्नो यथा यावद्द्रव्यं

नास्ति नाशः । तथा चैतन्यस्यापि नाशाभावप्रसङ्गात् । अनुमानन्तु मम शरीरमित्यादिभेदानुभवबाधितम् । अतएवाऽऽबालवृद्धं परिदृश्यमानं मृत शरीरमुद्दिश्य जीवो गतो गतो जीव इति प्रतीति व्यवहारावबाधितावुपपद्येते। अनेन मम शरीरमिति प्रतीतिव्यवहारौ राहोः शिर इति वत् गौणतयोपपद्येते । सत्यपि शरीरे संयोगविशेषाज्जातरक्तिम्नोऽपि नाश उपपद्यताम् । नहि सुधाहरिद्रयोः सतोस्संयोगविशेषात् जातरक्तिम्नो नाशाभावे अनेनापि चैतन्येन सति शरीरे नाशशून्येन भाव्यमित्यत्र राज्ञामाज्ञाऽस्ति । न हि दृष्टान्ते सर्वसाम्यमपेक्षितम् । तथात्वे पर्वतत्वशून्यस्य महानसस्याप्यदृष्टान्तत्वापातेन बह्वसमंजसं स्यादिति विषमोऽयमुपन्यास इत्याद्युक्तं दुरुक्तमित्यपास्तं । उक्तानुभवस्य गत्यन्तरशून्यस्य जागरूकत्वात् । किंचेत्याद्युक्तशरीरत्वानुमाने च मृतशरीरे व्यभिचारः । इदंच "शरीरस्य न चैतन्यं मृतेषु व्यभिचारत"इत्यादिवदता विश्वनाथपंचाननभट्टाचार्येणापि प्रत्यपादि । अपिच चैतन्यं न शरीरवृत्ति । शरीरावच्छेदककालत्वव्यापकाधेयताशून्यत्वात् व्यतिरेकेण शरीरत्ववत् । इति सत्प्रतिपक्षितं च पूर्वानुमानम् । इदमपि च सूचितं "शरीरस्य न चैतन्यमि"त्यादिना । किंच शरीरस्यात्मत्वकल्पे कृतहानाकृताभ्यागमप्रसङ्गोऽपि नैव वारितो भवतीति । स्वतन्त्राणामिन्द्रियात्मत्वपक्षोऽपि न युक्तिपथमवगाहते । योऽहमद्राक्षं सोऽहमिदानीं स्पृशामीत्यनुभवबाधितत्वात् स्प्रष्टुर्द्रष्टुश्चैक्यमवगाहमानोऽयमनुभवः भिन्नयोश्चक्षुस्त्वचोरात्मत्वं नानुमनुते । आस्तामयमनुभवविचारः । बहिरेव तावदिन्द्रियात्मत्वकल्पो न शोभते । तथाहि । किं प्रत्येकमिन्द्रियस्याऽऽत्मत्वं प्रतिजानीषे मिलितानां वा

नाद्यः । कस्यात्मत्वमिति केनचित् पृष्टः किमङ्ग ब्रूयाः । इदमिन्द्रियमात्मेत्यत्र एकत्र पक्षपातिन्या युक्तेरभावात् । किंच विना निनिगमकं तुष्यतुन्यायेन चक्षुरात्मेत्यभ्युपगच्छामः । तथापि यदि नाम शास्त्रविरुद्धभाषिणः अतएव जाताद्दुरदृष्टादान्ध्ये तव समुपगते तच्छरीरस्य मृतशरीरप्रायत्वाद्दाहादिसंस्कारः करणीयः स्यादिति यत्किंचिदेतत् । न द्वितीयः । मिलितानामात्मत्वं वदन् किमेकैकत्रात्मत्वमभ्युपैति न वा । आद्ये आद्योक्तदोषः । द्वितीये मिलितेषु विद्यमानात्मत्वमेकैकेन्द्रियनाशेऽप्यपयाति न वा । नाद्यः । यतश्चक्षुर्नाशे सति जीवत्येव त्वयि उक्तं दाहप्रसङ्गं स्मृत्वा तूष्णीमासितव्यम् । द्वितीये तु एकैकेन्द्रियनाशेऽप्युर्वरितैकैकेन्द्रिये विद्यमानमात्मत्वं न मिलितेषु पर्याप्तम् । अपि तु एकैकमेव पर्याप्नुयादिति स एव दुरात्मा प्रथमकल्पोक्तदोषः । अपि च शरीराधिष्ठातृणां बहूनामङ्गीकारे अस्मन्मत इवाधिष्ठातुरेकाभिप्रायवतोऽभावात् । तेषां बहूनां च प्रायः अभिप्रायैक्यासंभवान्नानादिक्षु विद्यमानैः पुरुषैराकृष्यमाणस्य पटस्येव काश्यादिजिगमिषुभिरिन्द्रियैरधिष्ठातृत्वेन संमतैराकृष्यमाणस्य शरीरस्य विदारणं स्यात् । स्याच्च नियमेनैकत्राप्रवृत्तिः । एकस्य मनसस्तथात्वे तु "मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्" इत्युक्तसुखाद्यप्रत्यक्षत्वापत्तिदूषणं बोध्यम् । श्वासोच्छ्वासावेवात्मेत्यपि न प्राज्ञसंमतम् । तथात्वे श्वासमहं बध्नामि उत्सृजामीत्यादिबद्धत्वबन्धकत्वादिविरुद्धधर्मावगाह्यनुभवविरोधापातात् । किंच सभायां तावल्लौकिकीं रीतिमनुरुध्य वक्तव्यं । नचेद्बहिष्कार्यः स्यात्सभातः । प्रकृते च सुप्तिकाले सकलेन्द्रियाणामुपरमेऽपि श्वासोच्छ्वासयोः प्रवृत्तिर्दृष्टा । न ह्येवं

लौकिकानामनुभवः । यतोऽभिजनवतो गृहस्थस्य गृहे पूर्वसुप्तिः तदनु भृत्यानामिति । एवमेव सार्वत्रिकोऽप्यनुभवः । यन्नियम्यव्यापारनिवृत्तिर्नियामकव्यापारनिवृत्त्युत्तरकालिकीति । न तु कदाऽपि नियामके व्याप्रियमाणे सति नियम्याः सुखासीना भवन्तीति । प्रकृते तु विपरीतम् । यजमानस्य सर्वदा प्रवृत्तिः भृत्यत्वेनाभिमतानामिन्द्रियाणान्तु स्वच्छन्दं सुषुप्तिरिति । अतः सुष्ठूक्तं **जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्चेति** । अत्र प्रथमतोऽविभक्तस्येश्वरस्य प्रथमं लक्षणकरणे किं बीजम् । न तावत्प्राधान्यम् । तथासति विभागेऽपि पूर्वमुक्त्यापत्तेरिति चेत् सूचीकटाहन्यायेनेश्वरः प्रथमं लक्षित इति विज्ञायताम् । विभागे पूर्वपातित्वाभावस्तु महामल्लभङ्गन्यायानुसारेण बोध्यः । नन्वाभ्यामेव न्यायाभ्यां वैपरीत्यं किं न स्यादिति चेदस्त्येव नियामकान्तरम् । जीवस्य बहुवादिसंमतत्वात् प्रथमतो निर्देशः । उक्तन्यायात्प्राधान्याच्च प्रथमतः ईश्वरस्य लक्षणकरणमिति । ईश्वरसत्त्वे प्रमाणन्तु कार्यत्वानुमानम् । तेन सामान्यतः सकर्तृकत्वे सिद्धे क्षित्यंकुरादिकमस्मदाद्यतिरिक्तकर्तृकं बाधितास्मदादिकर्तृकत्वे सति सकर्तृकत्वात् । यद्बाधितयत्कर्तृकत्वे सति स कर्तृकं तत्तदतिरिक्तकर्तृकं यथा बाधितकुलालकर्तृकः सकर्तृकः पटः कुलालातिरिक्तकुविन्दकर्तृक इति परिशेषादतिरिक्तेश्वरसिद्धिरिति । मनःसत्त्वे प्रमाणन्तु सुखादिसाक्षात्कारः सकरणकः क्रियात्वात् घटसाक्षात्कारवत् । अनेन सकरणकत्वे सिद्धे सुखादिसाक्षात्कारः चक्षुराद्यतिरिक्तकरणकः बाधितचक्षुरादिकरणकत्वे सति सकरणकत्वात् कुठारादिकरणकछिदिक्रियावत् । चक्षुरादिकरणकत्वबाधस्तु अन्धबधिरादीनामपि

सुखादिसाक्षात्कारानुभवात् । अनेन किमुक्तं स्यादिति चेदेवमवेहि । सुखादिसाक्षात्कार. न चक्षुःकरणकः चक्षुर्व्यभिचारित्वादन्धगमनादिक्रियावत् । एवमन्येष्वपीन्द्रियेषु व्यभिचारो बोध्यः । ननु सुखसाक्षात्कारस्य चक्षुराद्यकरणकत्वेऽपि त्वक्करणकत्वाङ्गीकारे न किमपि बाधकं पश्यामः । चक्षुरादिशून्यवत् न हि कश्चिदपि त्वगिन्द्रियशून्यः सुखमनुभवन् दृष्टः । अतो न मनःसिद्धिरिति चेत्तर्ह्यनयैव त्वक्करणकत्वचिन्तया स्याच्चक्षुषो निर्निमेषत्वम् । यतस्त्वगिन्द्रियस्य सर्वशरीरव्यापित्वेन तत्संयोगरूपव्यापारस्य चात्मनि सर्वदा सत्त्वेन ज्ञानधाराप्रसङ्गेन सुप्त्यभावापत्ते· । न ह्यस्मन्मत इव पुरीतत्व्द्यतिरिक्तदेशावच्छेदेन संयोग· कारणमिति वदन् कृती स्यात् । त्वगिन्द्रियस्य व्यापित्वोक्ते । अतस्त्वगिन्द्रियस्य करणस्य सत्त्वेऽपि सुप्तिकाले सुखादिसाक्षात्काराननुभवेनान्वयव्यभिचारात्त्वक्करणकत्वासिद्ध्याऽतिरिक्तमेव करणं मन· सिध्यतीति । तच्चाणु । तदितरपरिमाणशून्यत्वे सति परिमाणवत्त्वात् परमाणुवत् । परिमाणवत्त्वं च द्रव्यत्वात् सेत्स्यति । तच्च क्रियावत्त्वात् । सा च मनस्तत्र गतं इदानीं नास्तीत्यनुभवात् सिध्यति । ननु कथमितरपरिमाणशून्यत्वं । तथाहि । मनो विभु स्पर्शरहितत्वे सति द्रव्यत्वात् गगनवत् । अत्र च क्रमेण घटरूपयोर्व्यभिचारवारणाय सत्यन्तविशेष्यभागाविति चेन्न । यतो हि अनुकूलतर्कसनाथा एव हेतवो हेतवः । प्रकृते तदभावादप्रयोजकता । अन्यथा गन्धवद्द्रव्यं न पृथिवी मूर्तत्वात् जलादिवत् । गगनं वा न शब्दवत् विभुत्वाद्दिगादिवदित्यादिकं सत्स्यात् । स्याच्च आत्मा भवान्वा न ज्ञानी विभुत्वात् भवत्त्वाद्वा

गगनवत् व्यतिरेकेण मद्रव्येति । सर्वमिदं वस्तुतत्वमनवलंव्याभिहितम् । वस्तुतस्तु आत्मनो विभुत्वस्य पूर्वमुपपादितत्वात् । मनसोऽपि विभुत्वाङ्गीकारे विभुद्वयसंयोगाभावेनात्ममनसो संयोगरूपस्य ज्ञानकारणस्याभावप्रसङ्गेन आत्मा न ज्ञानीत्याद्युक्तानुमानस्य तर्कसनाथत्वापत्तिः । विभुद्वयसंयोगांगीकारेऽपि अनित्यसंयोगसामान्यस्य क्रियाकारणकत्वेन विभ्वोस्तयोश्च क्रियाशून्यतया जन्यसंयोगासंभवे नित्यसंयोगप्रसङ्गेन पुनः सुषुप्त्यभावप्रसङ्गो दुर्वार इति बाधकतर्कसंभवान्न विभु मनः । नापि मध्यमपरिमाणं तथात्वेऽनित्यत्वप्रसङ्गात् । न चेष्टापत्तिः । तर्ह्यात्ममनसोः कार्यकारणभावज्ञाप्यज्ञापकभावाद्यभावेन मनःशून्योऽप्यात्मा क्वचिदनुभूयेत । तस्य चानुभवासंस्पर्शेनाप्रामाणिकतयाऽङ्गीकर्तुमशक्यत्वात् । अनुभवश्च सार्वत्रिक मनसैवाहं व्यज्ञासिषं मनसैव तमर्थमस्प्राक्षं तेनैवचात्याक्षमित्यादिर्मनःसाहित्येनैवात्मानं गोचरयति । नचेदानीं मन्मनो नासीदित्यादेः मनःशून्यतयाप्यात्मविषकानुभवस्य जागरूकतया पूर्वोक्तं बिभीषिकामात्रं न बाधनक्षममिति वाच्यम् । यतो ह्यस्मिन् विषये मम मनो नासीत् किन्तु अन्यत्र गतमित्याद्यनुभवेन विषयविशेषे मनः शून्यस्याप्यात्मनो विषयान्तरे तत्साहित्येनैव विषयतया विषयविशेषमन्तरा सर्वथा मनःशून्यतयाऽऽत्मनोऽनुभवस्यालीकत्वात् । तथाच मनो न मध्यमपरिमाणं नित्यत्वात् गगनादिवत् उक्तः सर्वोऽपि हेतूच्छित्तिरूपः विपक्षे बाधकस्तर्क इति । तथाच हेत्वसिद्धिशङ्काविरहसहितेन पूर्वोक्तपरिशेषानुमानेन मनसोऽणुत्वसिद्धिः । मुक्तावल्यान्तु "अयौगपद्याज्ज्ञानानां" मित्यादिना मूलेन युक्त्यन्तरमेवोपन्यस्तम् । अधिकमन्यत्रानुसन्धेयमित्यलं ।

## ॥ चक्षुर्मात्रग्राह्यो गुणो रूपम् ॥

अत्र मात्रपदार्थः इतरत् अभावश्च । जन्यत्वं तृतीयार्थः । चक्षुः-पदार्थस्य प्रतियोगितासंबन्धेनेतरपदार्थैकदेशभेदेऽन्वयः । इतरस्य निरूपितत्वसंबन्धेन तृतीयार्थजन्यत्वे । तस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबन्धेन अपरमात्रपदार्थाभावे । चक्षुषो निरूपितत्वेन तृतीयार्थजन्यतायां । तस्याः अभावस्य च स्वरूपेण ग्रहधात्वर्थेऽन्वय । तथाच चक्षुरितरनिरूपितजन्यत्वाभाववच्चक्षुर्निरूपितजन्यतावज्ज्ञाननिरूपितविषयतावदभिन्नगुणाभिन्नं रूपमिति बोधः । अस्मिन्नर्थे संख्यायामतिव्याप्तिः संख्याविषयकचाक्षुषज्ञाने चक्षुर्जन्यत्वतदितातराजन्यत्वयोः सत्त्वात्ताहज्ञानविषयतावद्गुणत्वस्य संख्यायामबाधादिति कल्पान्तरमेव केचित्समाश्रितवन्तः । तथाहि । मात्रादिपदानामर्थः पूर्ववत् । तत्र चक्षुषोऽनुयोगितासंबन्धेन इतरपदार्थैकदेशे भेदे इतरस्य जन्यतायां तस्याः ज्ञाने तस्य विषयतायां तस्याः अपरमात्रपदार्थाभावे । एवं चक्षुषो जन्यतायां तस्याः ज्ञाने तस्य विषयतायां तद्वतोऽभेदेन गुणे इत्यादि पूर्ववत् । तथाच चक्षुरितरनिरूपितजन्यतावज्ज्ञाननिरूपितविषयत्वाभाववच्चक्षुर्निरूपितजन्यतावज्ज्ञाननिरूपितविषयतावदभिन्नगुणाभिन्नं रूपमिति । अत्रच कल्पे द्वीन्द्रियग्राह्यसंख्यायां चक्षुरितरेन्द्रियजन्यतावज्ज्ञाननिरूपितविषयत्वाभावाभावात् न पूर्वोक्तातिव्याप्तिः । अस्मिन् कल्पेऽपि 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' 'एकत्र विशेषणत्वेनोपस्थितस्य अन्यत्र विशेषणत्वेनान्वयायोगात्' 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व'मित्यादिबहुन्यायविरुद्धत्वादप्रामाणिकत्वं दुर्वारम् । तथाहि सकृदुच्चरितस्य चक्षुःपदस्य द्विवारमन्वयार्थं

द्विरुपस्थितिकल्पना । एवमितरपदार्थैकदेशभेदे विशेषणत्वेनान्वितस्य चक्षुषः तृतीयार्थजन्यत्वे विशेषणतयाऽन्वयः । ग्राह्येत्यत्र यत्प्रत्ययार्थविषयतायाः प्रकृत्यर्थभिन्ने मात्रपदार्थाभावेऽन्वयः । एवं विषयतावद्भिन्नविशिष्टार्थमध्ये विषयतारूपमेकदेशं विभज्यान्यत्रान्वयकल्पनाप्यप्रामाणिकीति । अतोमुमपि कल्पं विहायान्येऽन्यमेवोपाददुः । तथाहि । केवलं चक्षुः चक्षुर्मात्रमिति मयूरव्यंसकादित्वादस्वपदविग्रहः । तत्र कैवल्यं मात्रपदार्थः । कैवल्यं च स्वभिन्नत्वप्रकारकतात्पर्यविषयनिरूपितसंबन्धविशेषावच्छिन्नकिंचिन्निष्ठाभावीयप्रतियोगित्वम् । तस्य स्वरूपेण चक्षुषि अन्वयः । चक्षुषो निरूपितत्वेन जन्यत्वे तस्य ज्ञाने इत्यादि पूर्ववत् । एवंच निरुक्तकैवल्यवच्चक्षुर्निरूपितजन्यतावज्ज्ञाननिरूपितविषयतावद्भिन्नगुणाभिन्नं रूपमिति विशिष्टवाक्यार्थः संपन्नः । समन्वयप्रकारस्तु स्वपदेन चक्षुष उपादाने स्वभिन्नत्वप्रकारकतात्पर्यविषयस्त्वगादि तन्निरूपितसंबन्धविशेषो नाम ग्राह्यत्वरूपः तेन संबन्धेन चक्षुः रूपे नास्तीति । किंचित्पदेन रूपोपादाने तन्निष्ठाभावः चक्षुष इति ईदृशाभावीयनिरुक्तसंबन्धावच्छिन्नप्रतियोगित्वरूपं कैवल्यं चक्षुषीति । अत्र केचन पूर्वपक्षयन्ति । तथाहि । चक्षुर्भिन्नाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं पर्यवसितार्थः । नचेदं रूपे संभवति । रूपस्य चक्षुर्भिन्नसन्निकर्षग्राह्यत्वात् । एवं चक्षुर्भिन्नरूपग्राह्यत्वाच्च । रूपस्यापि स्वप्रत्यक्षं प्रति विषयविधया कारणत्वेन रूपग्राहकत्वात् । नच स्वसजातीयस्वभिन्नाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वस्य तदर्थत्वान्नेयमापत्तिः । साजात्यं च इन्द्रियत्वेन विवक्षितम् । तथाच सन्निकर्षादीनां प्रमेयत्वादिना स्वसाजात्येऽपीन्द्रियत्वेन तदभावान्नतद्ग्राह्यत्व-

मादायासंभवः संभवतीति वाच्यम् । तथापि इन्द्रियत्वेन सजातीयचक्षुर्भिन्नमनोग्राह्यत्वमादायासंभवस्य दुर्वारत्वात् । तथाच स्वभिन्नमनोग्राह्यत्वसंबन्धेन चक्षू रूपे वर्तत इति तदभावाभावाल्लक्षणानुपपत्तिरिति । समादधते चेतरे । चक्षुर्भिन्नत्वगाद्यग्राह्यत्वस्य तदर्थत्वान्नोक्तासंभवः । नच सामान्यव्यवच्छेदकस्य मात्रपदस्य त्वगादियत्किंचिद्व्यवच्छेदकत्वे गगनादियत्किंचिद्व्यावृत्तत्वेन रूपं पृथिवीमात्रवृत्तीति प्रयोगापत्तिः । नचेष्टापत्तिः । तथाप्रयोगस्यानानुभविकत्वात् । अतः सामान्यव्यवच्छेदकत्वस्य वाच्यत्वे मनसोऽपि चक्षुर्भिन्नपदेन संग्रहादुक्तदोषो दुर्वार इति वाच्यं । गृहे रामकृष्णौ विद्येते नवा इति पृष्टे राममात्रो वर्तते इत्यादिव्यवहारस्य सांव्यवहारिकत्वेन यत्किंचिद्व्यवच्छेदकत्वस्यापि सत्त्वात् । नच प्रश्नसमभिव्याहृतमात्रशब्दस्य यत्किंचिद्व्यावर्तकत्वेऽपि प्रकृते प्रश्नासमभिव्यवहारात्कथं यत्किंचिद्व्यावर्तकत्वमिति वाच्यम् । ग्रन्थस्यापि गुरुशिष्ययोः प्रश्नोत्तररूपत्वात् प्रकृतेऽपि प्रश्नसमभिव्याहारादिति । अथवा चक्षुरितरयत्किंचिदिन्द्रियवत्त्वावच्छिन्नजनकतानिरूपितजन्यतानवच्छेदिका चक्षुर्जन्यतावच्छेदिका या विषयिता तन्निरूपकत्वे सति गुणत्वं रूपस्य लक्षणम् । नाधुना मनोग्राह्यत्वेऽप्यसंभवः । रूपनिरूपितविषयिताया मनोजन्यतायामनवच्छेदकत्वात् । रूपनिरूपितविषयिताया मनोजन्ययावज्ज्ञानेष्वसत्त्वेन न्यूनवृत्तितया न्यूनवृत्तेरनवच्छेदकत्वादिति । तदुभयमपि परे प्रत्याख्यातवन्तः । तथाहि यदि गुरुशिष्ययोः प्रश्नोत्तररूपत्वाद्ग्रन्थस्य प्रश्नसमभिव्याहृतत्वमुपपाद्य यत्किंचिदिन्द्रियाग्राह्यत्वार्थकतां व्याख्यायासंभवः परिह्रियते तदा गन्धनिरूपणावसरे पृथिवीमात्र-

वृत्तिरित्युक्तावपि अस्याप्युक्तन्यायेन गन्धः पृथिव्यां जले वेति शिष्य-प्रश्नसमभिव्याहृतत्वसंभवेन जलमात्रव्यावृत्तत्वनिश्चयेऽपि गगनादिवृत्तित्वसंदेहानिवारणप्रसङ्गात् । नचेष्टापत्तिः । लोके तथा संदेहस्यानानुभविकत्वात् । द्वितीयसमाधानन्त्वतीव तुच्छम् । यदि निखिलज्ञानेषु अविद्यमानत्वाद्रूपविषयिता न मनोजन्यतायामवच्छेदिका तर्हि का सा विषयिता याऽवच्छेदिका भवेत् । कस्या अपि विषयितायाः यावज्ज्ञानवृत्तित्वाभावात् । तथाचाप्रसिद्धिः । एवं न्यूनवृत्तितया संख्यानिरूपितविषयिताऽपि न त्वग्जन्यतावच्छेदिकेति संख्यायामतिव्याप्तिः । न च चक्षुर्जन्यतावच्छेदकत्वस्य संख्याविषयितायामभावान्नेयमतिव्याप्तिरिति वाच्यम् । तथासत्यसंभवापत्तेः । नहि रूपविषयिता चक्षुर्जन्येषु यावज्ज्ञानेषु विद्यत इति न्यूनवृत्तितया साऽपि न चक्षुर्जन्यतावच्छेदिकेति । अतस्तदुभयमप्यसदित्युक्त्वा व्याख्यातवन्तश्च लक्षणमन्यथैव । तथाहि । चक्षुरितरेन्द्रियाग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियसन्निकर्षविशिष्टविषयताशून्यत्वम् । वैशिष्ट्यं च स्वसामानाधिकरण्यस्वप्रयोज्यत्वोभयसंबन्धेन । अतो नासंभवः । भिन्नेन्द्रियपदेन मनसो ग्रहणेऽपि सामानाधिकरण्यघटितोभयसंबन्धेन मनःसन्निकर्षवैशिष्ट्यस्य रूपविषयतायामभावात् । नातिव्याप्तिश्च संख्यायां । तद्विषयतायाश्चक्षुर्भिन्नत्वगिन्द्रियसन्निकर्षविशिष्टत्वात् । अत्र सामानाधिकरण्यमात्रनिवेशे रूपमनसोरुदासीनं सन्निकर्षमादाय रूपविषयतायां मनःसन्निकर्षवैशिष्ट्यस्य सत्त्वादसंभवः । एवं प्रयोज्यत्वमात्रनिवेशेऽपि ज्ञानकारणीभूतात्ममनःसन्निकर्षमादाय तद्वैशिष्ट्यस्य रूपविषयतायां सत्त्वात्स एव दोष इति संबन्धद्वयोपादानम् ।

एवंच परमाणुरूपादावव्याप्तिवारणाय चक्षुर्भिन्नेन्द्रियसन्निकर्षविशिष्टविषयतावदवृत्तिचक्षु:सन्निकर्षविशिष्टविषयतावद्वृत्तिजातिमद्गुणत्वमिति लक्षणं परिष्करणीयमिति प्राहु: । एतेन ननु स्त्रीसौभाग्येऽतिव्याप्तिः । चक्षुर्भिन्नाग्राह्यत्वपदेन चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वस्येदं रूपवत् त्वग्वत्त्वादित्याद्यनुमानजन्यज्ञानविषयरूपे असंभववारणाय विवक्षणीयतया अदृष्टापरपर्यायसौभाग्यस्यापि चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वात् । इयं भाग्यवती एणाक्षित्वात् व्यतिरेकेणास्मद्गृहिणीवदित्यादिचक्षूरूपानुमान जन्यज्ञानविषयत्वाच्च भाग्यस्य । न च चक्षुर्जन्यज्ञानपदेन प्रत्यक्षरूपज्ञानस्य विवक्षितत्वान्नेयमतिव्याप्तिरिति वाच्यम् । तथाऽप्यन्धकारे त्वचा पुस्तकज्ञानदशायां स्वसंयुक्तसंयुक्तात्मवृत्त्युद्बुद्धसंस्काररूपालौकिकप्रत्यासत्त्या त्वचा रूपस्यापि ग्रहणादसंभवः । अव्याप्तिर्वा । स्वभिन्नेन्द्रियजन्यप्रत्यक्षपदेन लौकिकप्रत्यक्षविवक्षणेऽपि स एव दोषः । तस्यापि त्वाचप्रत्यक्षस्य पुस्तकांशे लौकिकत्वात् । यदिच चक्षुर्भिन्नेन्द्रियजन्यतावच्छेदकविषयतायां लौकिकसन्निकर्षप्रयोज्यत्वं निवेश्य पुस्तकविषयताया लौकिकसन्निकर्षप्रयोज्यत्वेऽपि रूपविषयतायास्तदभावेन नोक्तदोष इति विभाव्यते तदा स्त्रीभाग्येऽतिव्याप्ति । तस्यातीन्द्रियत्वेन चक्षुर्भिन्नेन्द्रियजन्यतावच्छेदकीभूतलौकिकसन्निकर्षप्रयोज्यविषयताशून्यत्वेन सत्यंताक्रान्तत्वात् । चक्षुर्जन्यप्रत्यक्षविषयत्वाच्च । नचातीन्द्रियस्य कथं प्रत्यक्षत्वमिति वाच्यम् । भाग्यवतीयमेणनयना इति नायनप्रत्यक्षेण पूर्वोक्तानुमित्यात्मकालौकिकसन्निकर्षेण जन्येन, तज्जन्यसंस्कारेण जन्ययाऽलौकिक्या स्मृत्या वा तत्र भाग्यस्य विषयीकरणात् । यदि नाम

चक्षुर्जन्यतावच्छेदकीभूतविषयतायामपि लौकिकसन्निकर्षप्रयोज्यत्वं निवेश्यातादृशविषयतावति भाग्येऽतिव्याप्तिर्वार्यते । तदा वार्यतामयं दोषः । तथापि सार्पशब्दे अतिव्याप्तिर्दुर्वारा । सर्पस्य चक्षुःश्रवस्त्वेन श्रोत्राभावेन चक्षुषैव शब्दप्रत्यक्षजननात् । नच तत्रेन्द्रियान्तरं शक्यम् । चक्षुषी एव श्रवसी यस्येति विग्रहविरोधात् । नचैवमेव विग्रह कर्तव्य इति न हि राज्ञामाज्ञाऽस्ति । चक्षुष्येव श्रवसी यस्येति विग्रहस्यापि संभवादिति वाच्यत् । संभवति समानाधिकरणबहुव्रीहौ व्यधिकरणबहुव्रीहेः जघन्यत्वेनानादरणीयत्वात् । "धर्मिकल्पनातो धर्मकल्पना लघीयसीति" न्यायेन चक्षुषि इन्द्रियान्तरकल्पनापेक्षया चक्षुष एव शब्दग्राहकत्वकल्पनायाः लघीयस्त्वाच्च । नचादृष्टकल्पनापेक्षया दृष्टधर्म्यन्तरकल्पनैव लघीयसीति वाच्यम् । चक्षुषि इन्द्रियान्तरस्याप्यदृष्टत्वेनादृष्टकल्पनायाः उभयत्र तौल्ये धर्मिकल्पना परमतिरिच्यते भवताम् । अन्यथा मार्जारस्याऽऽलोकासहकारेऽपि रूपवद्द्रव्यग्रहणसमर्थमिन्द्रियान्तरं घूकस्य रात्रावेव रूपवद्द्रव्यग्रहणसमर्थमपरमिन्द्रियं कल्पनीयमिति धर्मिकल्पनाप्रयुक्तं बहिरिन्द्रियकल्पनाप्रयुक्तं चेति गौरवद्वयापत्तेरिति चेदत्र केचित् । चक्षुषि अदृष्टशब्दग्राहकत्वकल्पनापेक्षया दृष्टकल्पनायाः गौरवं भूषणमेव । तथाच तव तत्र पृथगिन्द्रियाणि कल्प्यन्त इति नोक्तदोषावकाश इति समादधिरे । यद्यप्यत्र गुणदोषचिन्तायां मार्जारघूकादिष्वन्यत्रादृष्टेन्द्रियान्तरतत्तत्पदार्थग्राहकत्वरूपधर्मधर्म्युभयकल्पनासद्भावात् पूर्वोक्तधर्मकल्पनापेक्षया दृष्टकल्पनस्यैव गुरुत्वं प्रतिभाति । तथापि अदृष्टधर्मकल्पनाया विचारासहत्वादिदं भूषणमित्यभिहितम् । तथाहि ।

चक्षुष एव शब्दग्राहकत्वं वदन् पष्टव्यो भवति । किं चक्षुः संबद्धं शब्द-प्रतीतिं जनयति । उतासंबद्धं । आद्ये संबन्धः कः संयोगः समवायो वा । नाद्य द्रव्यद्रव्ययोरेव संयोग इति नियमात् । नान्त्यः शब्दस्य चक्षुरगुणत्वेन प्रत्युताकाशगुणत्वेन शब्दचक्षुषोः समवायाभावात् । न द्वितीयः । असंबद्धस्य चक्षुषो ग्राहकत्वे विदेशस्थघटादिग्रहणप्रसङ्गात् । सर्वमिदं मनसि निधाय गौरवं भूषणमित्यंग्यकार्षुः । परे तु चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वमित्यत्र चक्षुःपदं शब्दाग्राहकचक्षुःपरम् । तथाच शब्दाग्राहकचक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्य-प्रत्यक्षविषयत्वमिति फलितम् । इत्थं च सत्यन्ताक्रान्तत्वाभावात् नातिव्याप्तिः । शब्दाग्राहकचक्षुर्भिन्नेन्द्रियपदेन सर्पचक्षुषोऽपि ग्रहण-संभवेन तद्ग्राह्यत्वस्यैव सर्पश्रुतशब्दे सद्भावादित्याहुरित्यादि सर्वं कोला-हलजातमपास्तं । परमाणुरूपेऽव्याप्तिवारणाय जातिघटितलक्षणस्यावश्यं वाच्यत्वात्तत एव सर्पश्रुतशब्देऽतिव्याप्तेरभावेन पूर्वोत्तरपक्षयोरनवकाशात् । स्त्रीभाग्येऽतिव्याप्तिशङ्का नोदेति । सन्निकर्षविशिष्टविषयनेत्यत्र सन्निकर्षपदेन लौकिकसन्निकर्षस्य विवक्षितत्वादिति सुन्दरः पन्थाः ।

## ॥ रसनाग्राह्यो गुणो रसः ॥

अयं सुकृती मधुरग्राहकरसनेन्द्रियवत्त्वादिति शिरोगतपित्तवि-कृतजिह्वपुरुषसमवेतरसनेन्द्रियजन्यानुमितिविषयसुकृतेऽतिव्याप्तिवारणाया-लौकिकसन्निकर्षमादाय गुडादावप्यतिव्याप्तिवारणाय लौकिकप्रत्यक्षपर-तया ग्रहधातोर्विवक्षणेऽपि गुडादिप्रत्यक्षे रसांशे लौकिके भातगुडादौ पुन-तिव्याप्तिवारणाय रसनाग्राह्यपदं रसनेन्द्रियजन्यज्ञानीयलौकिकसन्निकर्ष

प्रयोज्यविषयतावदर्थकत्वेन व्याख्येयम् । अथ परमाणुरसेऽव्याप्तिवारणाय रसनेन्द्रियजन्यप्रत्यक्षविषयजातिमदर्थकत्वेन तत्पदस्य पुनरपि व्याख्येयम् तथा तत एव रसत्वेऽनतिव्याप्तेर्गुणपदं व्यर्थमिति चेन्न । रसनेन्द्रियजन्यप्रत्यक्षविषयगुणत्वसत्ताजातिमादाय रूपादावतिव्याप्तिवारणाय जातौ गुणत्वव्याप्यत्वपर्यवसितार्थकस्य गुणपदस्यावश्यकत्वात् । गुणत्वादेः रासनाविषयरूपादावपि सद्भावान्न रासनविषयत्वमिति तु भ्रम । तथासति रसत्वस्यापि रासनाविषयपरमाणुरसे सद्भावेन रासनाविषयत्वं स्यादित्यतिव्याप्तिवारणप्रकारस्यासंभवसंपादकत्वापत्तेरित्यवधेयम् ।

॥ त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः ॥

अत्र बाधश्चक्षुर्मात्रेत्यादिवत् । त्वगितरेन्द्रियजन्यप्रत्यक्षविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वमिति फलितार्थः । अत्र प्रत्यक्षपदप्रयोजनं मन आदाय प्राप्तासंभववारणं च रूपलक्षण इव प्रदर्शनीयम् । रूपादीनां भूतमात्रात्मकत्वेन पृथिव्यादिषु यथायथमन्तर्भाव इति मतनिरासार्थं गुणपदम् । इदं च समाधानं पूर्वमुत्तरत्रापि संभवति । यद्वा प्राचीनमते वायोस्त्वाचप्रत्यक्षत्वेन वायावतिव्याप्तिवारणाय गुणपदम् । परमाणुस्पर्शेऽव्याप्तिवारणायावश्यकरणीये जातिघटितलक्षणे तु वायुत्वजातिमादाय वायावतिव्याप्तिवारणाय गुणपदम् । एतेन रसत्वे जातिघटितलक्षणाभावादतिव्याप्तेरसंभवेन गुणपदं व्यर्थमित्यपास्तम् । मतविशेषनिरासाय वा वायावनतिव्याप्तये वा तत्पदस्योपात्तत्वादिति । वस्तुतस्तु संयोगसंख्यादावतिव्याप्तिवारणाय गुणपदम् । तथाहि । तत्रापि त्वगिन्द्रियमात्रग्राह्यसंयोगत्वसंख्यात्वादिजातिमादायातिव्याप्तेः

शक्योपपादनत्वात् । न च संयोगादेर्द्वीन्द्रियग्राह्यत्वेन संयोगत्वादौ त्वगिन्द्रियमात्रग्राह्यत्वं नास्तीति वाच्यम् । यथा हि लोके जानेऽहं चैत्रस्येयं लिपिर्न मैत्रस्य तस्य तु विलक्षणा इत्यादि प्रतीतिव्यवहाराभ्यां तत्तत्कृतिजन्यतावच्छेदिका तत्तल्लिपित्वादिर्जातिर्नानैवेति सार्वजनीनम् । एवमेव यत्र दशादिसंयोगादयः केवलं त्वचैव गृहीताः तेषु दशादिषु विद्यमाना इमे तु इतरसंयोगापेक्षया विलक्षणा इति प्रतीत्या संयोगत्वव्याप्यजातिरङ्गीक्रियते । प्रकृते तां जातिमादाय संयोगादावतिव्याप्तेरुक्तत्वात । अतएव प्राचीनैः स्वग्रन्थे चैत्रादिजन्यतत्तद्घटादिषु विद्यमाना घटत्वव्याप्या विभिन्ना एव जातयोऽङ्गीकृताः । नच विलक्षणेति प्रतीतिर्न वैजात्यविषयिणी किन्तु परस्परभिन्नत्वविषयिणीति न जात्यन्तरसिद्धिरिति वाच्यं । यतो हि परस्परं भेदश्चैत्रलिपिष्वपि विद्यते । अतश्चैत्रलिपिष्वपीयं लिपिस्तल्लिपितो भिन्नेति परस्परं विलक्षणेति प्रतीतिवारणाय वैजात्यमेव प्रतीतिविषय इत्यङ्गीकरणीयम् । किंचैककर्तृकास्वनेकासु लिपिषु विद्यमानं पारस्परिकं भेदमनवगाहमाना मुक्ताफलमिवादसीया लिपिः चैत्रलिपिजातिरन्यैव मैत्रलिपिजातिस्त्वतरैवेत्याद्याकारिकी प्रात्यक्षिकी प्रतीतिर्नापन्होतुं शक्या । अतस्तत्रतत्र संयोगादौ तादृशीं जातिमादायातिव्याप्तिवारणाय गुणपदम् । नच संयोगादौ गुणत्वस्य गुणपदस्य गुणत्वव्याप्यजात्यर्थकत्वेऽपि तादृशोक्तजातेः सत्त्वेनातिव्याप्तिः पविपातायितेति वाच्यम् । गुणपदस्य गुणविभाजकोपाध्यर्थकत्वात् । तथाच त्वगिन्द्रियमात्रग्राह्यगुणविभाजकोपाधिमत्त्वं लक्षणं पर्यवस्यति । तथाच संयोगादौ नातिव्याप्तिः । संयोगत्वस्य त्वगिन्द्रिय-

मात्राग्राह्यत्वात् । संयोगत्वादिव्याप्योक्तजातिषु च गुणविभाजकोपाधित्वाभावात् । अभिप्रैति चामुमर्थं नीलकण्ठोऽपि । अन्यथा त्वङ्मात्रग्राह्यगुणविभाजकोपाधिमत्त्वमिति फलितार्थे इत्युपाधिघटितत्वेन लक्षणं परिष्कुर्वन् व्यर्थभाषी स्यात् । अस्मदुक्तां रीतिमनवलंब्य गुणविभाजकोपाधिमत्त्वेन प्रवेशनस्य प्रयोजनाभावात् । नन्वेवं सति "एकामापत्तिं परिहरतो द्वितीयापत्तिरि"तिन्यायेन चक्षुर्मात्रग्राह्यप्रभाभित्तिसंयोगादौ संयोगत्वव्याप्यजातेरुक्तन्यायसाम्यादङ्गीकरणीयतया जातिघटितमपि रूपलक्षणं संयोगादावतिव्याप्नोतीति चोद्यस्य कः परिहर्तेति चेत् । तत्रापि गुणपदस्य गुणविभाजकोपाधिमत्त्वे तात्पर्यमित्याकलनीयम् ।

॥ रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च ॥

रूपमादिर्येषां यच्छब्दार्थः रसादिः षष्ठ्यर्थो घटितत्वम् । आदिपदार्थः समुदायघटकवस्तुविषयकप्रतीतिप्रागभावकालीनप्रतीतिविषयः । निरूपितत्वसंबन्धेन प्रकृत्यर्थविशेषितस्य षष्ठ्यर्थघटितत्वस्य स्वरूपसंबन्धेन आदिपदार्थैकदेशे समुदायेऽन्वयः । आदिपदार्थस्याभेदेन रूपेऽन्वयः । तथाच रूपं रसादिनिरूपितघटितत्ववत्समुदायघटकवस्तुविषयकप्रतीतिप्रागभावकालीनप्रतीतिविषयाभिन्नमिति विग्रहार्थ । विग्रहवाक्याद्यादृशविशेषणविशेष्यभावापन्नस्य बोधः । समासवाक्यात् तद्विपरीतविशेषणविशेष्यभावापन्नस्य बोधः । यथा पीतांबरो हरिरित्यत्र पीताभिन्नमंबरं यत्संबन्धीति विग्रहवाक्यात् अंबरविशेष्यकयदर्थविशेषणकबोधजननात् । समासवाक्यात्तु बहुव्रीहेरन्यपदार्थप्राधान्येन पीतांबरवा-

नित्यंत्वरविशेषणकयद्धर्थविशेष्यकबोधजननात् । तद्रूपकृतेऽपि रूपवि-षयकप्रतीत्युत्तरकालिकप्रतीतिविषयवस्तुघटितसमुदायनिष्ठघटितत्वनिरूप-को रसादिरिति समासार्थः। पाकजमनित्यमित्यत्र पौर्वापर्ये "व्या-प्यस्य वचनं पूर्वमि"ति नियमो निमित्तम् । व्याप्यव्यापक-भावश्चेत्थं यत्रयत्र पाकजत्वं तत्रतत्रानित्यत्वमिति । तथाच पृथिव्यां रूपादिचतुष्टयमनित्यं पाकजत्वादिति । नन्विदमसङ्गतम्। यदि पृथिव्यां रूपादिचतुष्टयस्यानित्यत्वं पाकजत्वप्रयोज्यं स्यात्तर्हि प्रयोजकाभावादपाकजगुणानां नित्यत्वप्रसङ्गः । नचेष्टापत्तिः । पृथिव्यामपाकजगुणानङ्गीकारादिति वाच्यम्। अपाकजत्वेनाभ्युपगतानां पटीयगुणानां नित्यत्वस्यानिष्टत्वादिति चेन्न । पाकपदस्य प्रकृते पाकावयवगुणान्यतरपरत्वात् । नन्वेवमपि पाकावयवगुणान्यतरजन्यत्व-स्य ध्वंसं प्रति प्रतियोगिनः कारणत्वमिति रीत्या अवयवगुणध्वंसे पा-कजन्ये रूपध्वंसे च सत्त्वेन तत्रानित्यत्वरूपसाध्याभावाद्व्यभिचारः। नच तत्र ध्वंसप्रतियोगित्वरूपानित्यत्वाभावेऽपि प्रागभावप्रतियोगित्वरूपं तदस्त्येवेति न व्यभिचारावकाश इति वाच्यम्। तथासति हेतुसाध्य-योरैक्यप्रसङ्गात् । नचावयवगुणजन्यत्वघटकीभूतजनकतायां तादात्म्य-संबन्धानवछिन्नत्वं वा स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नत्वं वा अथवा जन्यतायां प्रतियोगितासंबन्धानवच्छिन्नत्वं स्वाश्रयप्रतियोगिक समवायानुयोगित्वसंबन्धावच्छिन्न वं वा समवायसंबन्धावच्छिन्नत्वं वा निवेश्य व्यभिचारः परिहृियत इति वाच्यम्। तथापि पाकजन्यगुणध्वंसे व्यभिचारापरिहारादिति चेदत्र केचित् । पाकजन्यत्वघटकीभूतजन-

कतायामपि समवायसंबन्धावच्छिन्नत्वनिवेशात् । ननु विलक्षणतेजः संयोगात्मकपाकस्य रूपध्वंसादेश्चेत्थं कार्यकारणभावः । स्वरूपसंबन्धेन घटे रूपादिध्वंसं प्रति समवायसंबन्धेन तादृशपाकः कारणमिति । तथाच पाकनिष्ठसमवायसंबन्धावच्छिन्नजनकतानिरूपितजन्यत्वस्य रूपादिध्वंसे सत्त्वात्कथं व्यभिचारपरिहार इति चेत् । जन्यतायामेव स्वरूपसंबन्धानवच्छिन्नत्वस्य समवायसंबन्धावच्छिन्नत्वस्य वा निविष्टत्वादिति । तथाच पृथिवीवृत्तिरूपादिचतुष्टयं ध्वंसप्रतियोगि पाकनिष्ठसमवायसंबन्धावच्छिन्नजनकतानिरूपितस्वरूपसंबन्धानवच्छिन्नजन्यत्वपाकनिष्ठजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यत्वैतदन्यतरावयवगुणनिष्ठतादात्म्यसंबन्धानवच्छिन्नजनकत्वसमवायस्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्नजनकत्वैतदन्यतरनिरूपितप्रतियोगित्वसंबन्धानवच्छिन्नत्व स्वाश्रयप्रतियोगिकसमवायानुयोगित्वसमवायान्यतरसंबन्धावच्छिन्नत्वान्यतरवज्जन्यत्वैतदन्यतरवत्त्वादित्यनुमानं फलितमित्याहुः । परे तु प्रागभावप्रतियोगित्वमेव साध्यं । नच साध्यावैशिष्ट्यं हेतोः । आद्यक्षणसंबन्धरूपाया उत्पत्तेः हेतुत्वेन प्रागभावप्रतियोगित्वस्य साध्यत्वेनावैशिष्ट्यशङ्कानुदयादितीमं प्रयासं नानुमेनिरे । तदुभयमपि न सत् । प्रथमतः पूर्वपक्ष एवायं नावतरति । येन समाधानं सङ्गच्छेत । पाकपदस्यान्यतरपरत्वं न कल्पनीयम् । नच पटीयगुणानां नित्यत्वप्रसङ्गः । कोऽयं व्यामोहः । यतो हेत्वभावात् साध्याभाव आपाद्यते । व्यापकाभाववति व्याप्याभावं प्रतिजानते लौकिकाः परीक्षकाश्च । नतु व्याप्याभाववति क्वचिदपि व्यापकाभावम् । परं समव्याप्तहेतुस्थले स्यादिदमापादनम् ।

नचैवं प्रकृते। किन्तु यत्र पाकजत्वं तत्रानित्यत्वमिति। तथाच हेत्वभावात्साध्याभावसाधने धूमाभावेन वन्ह्यभावसाधन इव निर्बीजत्वेनोन्मत्तप्रलपितत्वापत्त्या उत्तरानर्हत्वात्। एवं साध्यार्पकानित्यपदस्य प्रागभावप्रतियोगित्वार्थवर्णनमपि न चारु। अनित्यपदात्स्वरसतस्तादृशार्थाप्रतीतेः। ध्वंसप्रतियोगिष्वेव बहुलं तादृशप्रयोगात्। अत एव ध्वंसोऽनित्य इति न सार्वजनीनो व्यवहारः। किंच पार्थिवगुणानां ध्वंसप्रतियोगित्वासिद्ध्या उद्देश्यासिद्धेश्च। अतो यथाश्रुतमेव चार्वित्यलं पल्लविनेन। अनित्यं चेत्यत्र चशब्दस्य लिङ्गविशेषज्ञाप्यत्वप्रकारकजिज्ञासाविषयत्वमर्थः। तस्य स्वरूपसंबन्धेनानित्यपदार्थैकदेशानित्यत्वेऽन्वयः।

॥ अन्यत्रापाकजं नित्यमनित्यं च ॥

अपाकजमिति हेतुगर्भमिदं विशेषणम्। उत्तरपदार्थे द्वैविध्ये वक्ष्यमाणरीत्या हेतुरिति बोध्यम्। रूपादिचतुष्टयमित्यनुवर्तते। तथाचान्यनिरूपितवृत्तितावद्रूपादिचतुष्टयमिति निष्पन्नम्। तच्च बाधितम्। रूपादिचतुष्टयेऽन्यवृत्तित्वाभावात्। जलतेजोवायूनां गन्धरसरूपस्पर्शमध्ये क्रमेणैकद्वित्रयशून्यत्वादित्यतश्चतुष्टयपदं रूपादिघटितसमुदायघटकपरत्वेन व्याख्येयम्। अतो न बाधः। नित्यमनित्यं चेति द्विविधमिति शेषः। तथाचान्यनिरूपितवृत्तितावद्रूपादिघटितसमुदायघटकमपाकजत्वज्ञानज्ञाप्यनित्यत्वानित्यत्वाभिन्नविभाजकधर्मद्वयान्यतरवदिति विशिष्टवाक्यार्थः।

॥ एकादिव्यवहारहेतुः संख्या ॥

एकादिव्यवहारजनकतावच्छेदकप्रकारतावत्त्वमिति लक्षणं परि-

ष्करणीयं कालादिलक्षणवत् । कृत्यं स्वयमूहनीयम् । विस्तरभया-न्नात्र लिख्यते ।

॥ एकत्वादिपरार्धपर्यन्ता ॥

अत्र समुदायघटकवस्तुविषयकप्रतीतिप्रागभावकालीनप्रतीतिविषय आदिपदार्थः । समुदायघटकवस्तुविषयकप्रतीतिध्वंसकालीनप्रतीतिविषयः पर्यन्तांत्यादिपदार्थः । यद्यप्ययमर्थः आद्यन्तादिपदघटितवाक्यघटकमध्यगपदार्थोऽपि भवति । तथापीदानीं तत्साधारण्यं सम्मतमित्येवमभिहितम् । यदा "समवायस्त्वेक एवे"त्यादौ एकत्वं समवायमात्रसाधारणं प्राकपर्थ्येऽकारि एवमत्राप्याद्यन्तपदार्थमात्रसाधारणं मध्यगपदार्थावृत्ति च विवक्षितं चेत्तदा समुदायघटकवस्तुविषयकप्रतीतिध्वंसासमानकालीनप्रतीतिविषयत्वमादित्वं । एवं समुदायघटकवस्तुविषयकप्रतीतिप्रागभावासमानकालिकप्रतीतिविषयत्वमंत्यत्वमित्यवधेयम् । इत्थं चैकत्वमादिर्यस्या इति विग्रहवाक्ये यच्छब्दार्थः संख्या घटितत्वं षष्ठ्यर्थः । यच्छब्दार्थस्य निरूपितत्वसंबन्धेन षष्ठ्यर्थघटितत्वेऽन्वयः । घटितत्वस्य स्वरूपसंबन्धेनाऽऽदिपदार्थघटकसमुदाये आदिपदार्थस्याभेदेनैकत्वे चान्वयः। एवं चैकत्वं संख्याघटितसमुदायघटकवस्तुविषयकप्रतीतिप्रागभावकालीनप्रतीतिविषयाभिन्नमिति विग्रहार्थः । एवं परार्धपर्यंत यस्या इत्यत्राप्यर्थो वर्णनीयः । समासार्थस्तु एकत्वविषयकप्रतीत्युत्तरकालिकप्रतीतिविषयवस्तुघटितसमुदायघटकाभिन्ना परार्धविषयकप्रतीत्यधिकरणकालावृत्तिप्रागभावप्रतियोगिप्रतीतिविषयवस्तुघटितसमुदायघटकाभिन्ना च संख्येति ध्येयम् । एवं द्वितीयार्थेऽपि वाक्यार्थः स्वयमूहनीयः ।

## ॥ संयोगनाशको गुणो विभागः ॥

अत्र विभक्तव्यवहारहेतुर्विभाग इति व्यवहारघटितं लक्षणं पूर्वोत्तरलक्षणवत्कुतो न कृतम् । नच विभागलक्षणस्य विभागघटितत्वे आत्माश्रयप्रसङ्ग इति तथा नाभाणीति वाच्यम । तथासति पूर्वोत्तरलक्षणयोरपि दुष्टत्वापत्ते । अपिच "यश्चोभयोः समो दोष तत्र नैकः पर्यनुयोज्यः "इति न्यायेनास्यानाशङ्कनीयत्वादिति चेदुच्यते । विभागस्य बहुभिर्वादिभिरनङ्गीकारात् भेदेऽन्तर्भावितत्वाच्च तां विप्रतिपत्तिमपनिनीषुर्लक्षणान्तरं प्राणैषीत् ग्रन्थकृत । तथाच संयोगनाशजनकतावच्छेदकतया सिद्धविभागत्वजातेः क परिहर्तेति तदाशयः । अत्र क्रियायामतिव्याप्तिवारणाय गुणपदम् । नच दत्तेऽपि गुणपदे संयोगेऽतिव्याप्तिः शंक्या । प्रतियोगितासंबन्धानवच्छिन्नत्वेन जन्यतायास्समवायसंबन्धावच्छिन्न त्वेन जनकताया वा तादात्म्यसंबन्धानवच्छिन्नत्वेन वा तस्या निविष्टत्वात् । एवं सत्यपि क्रियायामतिव्याप्तिवारणाय गुणपदं सार्थकम् । न चैवं सति "संयोगनाशत्वावच्छिन्ननिरूपितसमवायावच्छिन्नकारणत्वमिति निष्कर्षः । एतत्तात्पर्यग्राहकं गुणपदमि"ति नीलकण्ठीय गुणपदाघटितनिष्कृष्टलक्षणकथनं दुष्टं स्यादिति वाच्यम् । यतो हि तस्यायमाशयः । यत् प्रथमतः क्रिया क्रियातो विभागः विभागात् पूर्वदेशसंयोगनाशः इत्यादिनियमेन संयुक्तहस्तद्वयस्थले हस्तान्तरक्रियया विभागद्वारा संयोगनाशो भवतीत्यङ्गीकारे संयोगनाशस्तु हस्तान्तरेऽभूत् क्रिया चेतरस्मिन् हस्त इति तयोस्सामानाधिकरण्याभावात् स्वरूपसंबन्धेन संयोगनाशं प्रति स्वजन्यविभागवत्तासंबन्धेन क्रियायाः कारणत्वे

वाच्ये समवायसंबन्धावच्छिन्नकारणतायाः क्रियायामभावान्न तत्राति-व्याप्तिरिति । नच संयोगस्य द्विष्ठत्वेन तन्नाशोऽपि नियामकाभावात् उभयत्रोपेय इति हस्तान्तरेऽपि संयोगनाशस्य सत्त्वेन क्रियासामाना-धिकरण्यप्राप्त्या समवायेनैव कारणत्वं क्रियायास्संभवतीति वाच्यम् । यतो हि यत्रयत्र कार्यं तत्रतत्र कारणमिति दैशिकी व्याप्ति । अन्यथा नियतत्वघटितस्य कारणत्वस्यैवानुपपत्तेः । तथाच संयोगनाश-रूपकार्यस्य हस्तद्वयेऽपि सत्त्वेन तत्र क्रियारूपकारणस्य समवायेनाभा-वात्स्वजन्यविभागवत्तासंबन्धेनैव कारणत्वं वक्तव्यमित्येतदभिप्रायकतया नीलकण्ठवाक्यस्योन्नेयत्वान्न तद्विरोधः ।

॥ आद्यपतनासमवायिकारणं गुरुत्वम् ॥

असमवायिकारणं नाम समवायसंबन्धावच्छिन्नकार्यतानिरूपित-समवायसंबन्धावच्छिन्नकारणतावत् । तदेकदेशकार्यतायां षष्ठ्यर्थाधेय-त्वान्वयः । यथा तालफले गुरुत्वं समवायेन विद्यमानं सत्समवायेन आद्यपतनरूपं कार्यमुपजनयतीति । अत्र चूतादिफलाद्यपतनकारणीभूते उत्क्षिप्तपाषाणसंयोगे वा वायुसंयोगे वा दण्डसंयोगे वा वृक्षारूढमाणवक-हस्तसंयोगे वा वानरादिसंयोगे वा अतिव्याप्तिः । अतः पतनविशिष्टा-न्यत्वं कारणतायां देयं । वैशिष्ट्यं च स्वसमानाधिकरणवृत्तित्वस्वान-धिकरणवृत्तिवृत्तित्वोभयसंबन्धेन । तथाच सर्वस्याप्युक्तसंयोगस्य या कारणता सा उक्तोभयसंबन्धेन पतनविशिष्टैवेति तत्र तदन्यत्वभावान्नाति-व्याप्तिः । अत्र प्रथमसंबन्धमात्रनिवेशे गुरुत्वनिष्ठकारणतायाः अपि पतनविशिष्टत्वेन तदन्यत्वाभावादसंभवः । अतो द्वितीयसंबन्धनिवेशः ।

तन्मात्रनिवेशेऽपि अन्यगतपतनविशिष्टत्वमादाय स एव दोष इत्युभय-संबन्धोपादानम् । तथाचाद्यपतननिष्ठसमवायसंबन्धावच्छिन्नकार्यतानि-रूपितपतनविशिष्टान्यसमवायसंबन्धावच्छिन्नकारणतावत्त्वं गुरुत्वस्य लक्ष-णमिति फलितम् । पतने आद्यत्वं च पतनविशिष्टान्यत्वं । वैशिष्ट्यं च स्वसमानाधिकरणत्वस्वप्रतियोगिकध्वंससमानकालिकत्वोभयसंबन्धेन । अत्र समानाधिकरणत्वानुपादाने फलान्तरगतपतनप्रतियोगिकध्वंससमान-कालिकत्वमादायासंभव । स्वसमानाधिकरणत्वमात्रोपादानेऽपि स्ववैशि-ष्ट्यमादायासंभव इत्यत उभयमुपात्तम् । अथवा पतनध्वंसविशिष्टान्यत्वमाद्य-त्वं । वैशिष्ट्यं च स्वप्रतियोगिसमानाधिकरणत्वस्वसमानकालिकत्वोभय-संबन्धेन । यद्वा ध्वंसविशिष्टान्यत्वं तत् । वैशिष्ट्यं च स्वप्रतियोगिपतन-समानाधिकरणत्व स्वसमानकालिकत्वोभयसंबन्धेन । अत्र कृत्यं पूर्ववत् स्वयमूहनीयम् । अत्र कारणतायां समवायसंबन्धावच्छिन्नत्वानुपादाने तादात्म्यसंबन्धावच्छिन्नकारणतावति फलेऽतिव्याप्तिः । कार्यतायां सम-वायसंबन्धावच्छिन्नत्वानुपादाने उपरिचरवसोरदृष्टेऽतिव्याप्तिः । तत्रादृष्टं उपरिचरवसौ समवायेन विद्यमानं सत्स्वजन्यभोगवत्तासंबन्धेनाऽऽद्यपतन-रूपं कार्यमुपजनयतीति । तथाच तत्र कार्यतायाः स्वजन्यभोगवत्ता-संबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावान्नातिव्याप्तिरिति ।

## ॥ श्रोत्रग्राह्यो गुणः शब्दः ॥

अत्र लक्षणे सर्पदृष्टरूपेऽतिव्याप्तिः पूर्वोक्तन्यायेनेन्द्रियान्तरस्य स्वीकाराद्वा रूपाग्राहकश्रोत्रग्राह्यत्वस्य विवक्षणेन वा वारणीया । नचैवं सार्पशब्देऽव्याप्तिः । तस्य रूपग्राहकश्रोत्रग्राह्यत्वादिति वाच्यम् । वने

जायमानाश्रुनशब्देऽव्याप्तिवारणाय रूपाग्राहकश्रोत्रग्राह्यजातिमत्त्वस्य वि-
वक्षितत्वेन तादृशजातेः सार्पशब्देऽपि सत्त्वेन व्याप्तेरनवकाशात् । नच
जातिघटितलक्षणस्य शब्दातिरिक्तेऽप्रसक्त्या गुणपदं व्यर्थमिति वाच्यम् ।
उक्तन्यायेनाधिकवृत्तिजातेरपि श्रोत्रग्राह्यत्वेन तादृशगुणत्वादिजातिमादा
यान्यजातिव्याप्तिवारकस्य जातौ गुणत्वव्याप्यत्वतात्पर्यकस्य गुणपदस्य
वैफल्याभावात । नच शब्दो द्रव्यं उत्तरदेशसंयोगानुकूलक्रियावत्त्वात्
घटादिवदित्यनुमानविरुद्धत्वादुक्तलक्षणमसंभवि । नचासिद्धो हेतुः श्रोत्र-
स्याकाशरूपत्वेन तत्र गमनाभावस्य सर्वसंमतत्वेन शब्दस्यापि गमना
भावे देशान्तरस्थशब्दवत्सर्वस्यापि शब्दस्य प्रायशोऽसंबद्धतया अग्र-
हणप्रसङ्गेन गुर्वाद्युक्तेरश्रुतत्वेन तव शिष्यस्य बाधिर्यं स्यात् । अतः
शब्दस्य गमनावश्यंभावान्नासिद्धो हेतुरिति वाच्यं । वीचीतरङ्गादिन्याया-
नुसारिशब्दस्य श्रोत्रदेशावच्छेदेन शब्दान्तरजनकत्वसंभवेन क्रियाभावेऽ-
पि श्रोत्रसंबन्धानुपपत्त्यभावेनानुमानस्यासिद्धिदुष्टत्वेन द्रव्यत्वासिध्या
नोक्तलक्षणमसंभवीति । अथैकस्माच्छब्दात् शब्दान्तरोत्पत्तिः किमेक-
देशावच्छेदेन उत दशदिगवच्छेदेन । आद्ये देशान्तरस्थस्य पुंसः शब्द-
प्रत्यक्षानुपपत्तिः । द्वितीये दशस्वपि दिक्षु शब्दधाराया उत्पत्त्या
कस्मिन् देशे समुत्पन्नोऽयं शब्द इति नियमेन संन्दिह्येत । तथाच कस्या-
पि क्वापि निश्चयो न स्यादिति चेदुच्यते । द्वितीयं पक्षमभ्युपगच्छामः ।
नचोक्तदोषः । यस्य श्रोत्रं यः शब्दः यद्देशावच्छेदेन समवैति स तद्देशा-
वच्छेदेन तं शब्दं प्रत्येतीत्यङ्गीकारे काऽनुपपत्तिः । नचैवमप्यर्धकोशपरि-
मितः शब्दः इत्यादिप्रत्यक्षानुपपत्तिर्दुर्वारैव । सर्वस्यापि शब्दस्य सन्नि-

हितस्यैव प्रत्यक्षत्वेनाप्रत्यक्षेऽसन्निहितशब्दे नियतदूरत्वादिप्रत्यक्षासंभवादिति वाच्यम्। कोहि नाम स्वस्थात्मा शब्दादेर्दूरत्वप्रत्यक्षमनुमनुते। किंनाम तारत्वमन्द्रत्वादिवैचित्र्यलिंगिका शब्दे दूरत्वादिविषयिणी व्युत्पन्नानामनुमितिरेव। अथवा सन्देहो वा स्यात्। अत एव स्वरस वाही लोकानामनुभवः। तत्रत्यः स्यादयं शब्दः क्रोशपरिमितः स्यादित्याद्याकारक इति।

॥ सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् ॥

अत्र सर्वेषु व्यवहारः सर्वेषां व्यवहार इति तत्पुरुषो वा कर्मधारयो वा। नाद्यः। सर्वान्तःपातिभ्रान्तकर्तृकव्यवहारस्य बुद्धिहेतुकत्वाभावात्। अत एव न द्वितीयतृतीयौ। ताल्वोष्ठपुटसंयोगेऽतिव्याप्तेश्च। गुणत्वस्यापि तत्र जागरूकत्वात्। किंच कस्मिन् ज्ञाने सर्वव्यवहारहेतुत्वं चैत्रीये वा मैत्रीये वा। एकैकस्य सर्वव्यवहारहेतुत्वे यदीयज्ञानस्य सर्वव्यवहारहेतुत्वं तदीयज्ञानविरहदशायामन्येषामपि व्यवहारानुत्पत्तिप्रसङ्गः। मिलितस्य तथात्वे कदापि मेलनासंभवेन व्यवहारसामान्यानुत्पत्तिप्रसङ्गः। किंचेश्वरेच्छादृष्टादिष्वतिव्याप्तिः। अत एव ज्ञानपदमुपात्तमिति तु मन्दम्। ज्ञानबुद्धिपदयो पर्यायत्वेन लक्षणलक्ष्यतावच्छेदकयोरैक्यप्रसक्त्या उपनयवाक्यात् शाब्दबोधानुपपत्तिप्रसङ्गः। बुद्धिपदवाच्यस्य लक्ष्यत्वमित्युक्त्या लक्षणलक्ष्यतावच्छेदकयोरैक्यपरिहारेऽपि "ज्ञानपदन्तु संज्ञान्तरकरणाये"ति ग्रन्थान्तरीयलक्षणाघटकत्वस्फोरकवाक्यविरोधात्। "नहि कस्यचित् ग्रन्थकृतो विपरीतलेखनमि"त्यादिन्यायाङ्गीकारेऽपि शेषवैयर्थ्यं दुर्वारमेव। किंच

सर्वव्यवहारहेतुत्वघटितज्ञानत्वस्य लक्षणत्वे ज्ञानत्वजातिमत्त्वस्य शेषाघटितस्य लक्षणत्वप्रतिपादकदीपिकाशुक्तिविरोधः । किंच कार्यसामान्यकारणे ईश्वरज्ञान एव सर्वव्यवहारहेतुत्वगुणत्वज्ञानत्वानां संभवेऽपि जैवज्ञानेष्वव्याप्तेश्चेति चेदुच्यते । सर्वत्वव्यापकधर्मवत्त्वं लक्षणम् । व्यापकत्वं च स्वावच्छिन्नकारणतानिरूपितकार्यत्वसंबन्धेन । व्याप्यत्वं च स्वावच्छिन्नविषयकव्यवहारत्वसंबन्धेन । अतो नासंभवः । स च धर्मो ज्ञानत्वमेव । सर्वव्यवहारं प्रति ज्ञानत्वेन कारणत्वात् । न चैवमुद्देश्यासिद्धिः सर्वमिति व्यवहारं प्रति ज्ञानस्य कारणत्वलाभेऽपि घट इत्याद्याकारकव्यवहारकारणत्वालाभादिति वाच्यम् । स्वव्याप्यधर्मावच्छिन्नविषयकव्यवहारत्वस्य व्याप्यताघटकसंबन्धत्वेन विवक्षितत्वात् । तथाच घटत्वादेरपि सर्वत्वव्याप्यतया स्वव्याप्यघटत्वादिधर्मावच्छिन्नविषयकव्यवहारं प्रत्यपि कारणत्वलाभान्नोद्देश्यासिद्धिः । नच धर्मे व्याप्यत्वस्य न्यूनदेशवृत्तित्वरूपस्य विवक्षितत्वे स्वस्मिन् स्वन्यूनवृत्तित्वाभावात् सर्व इति व्यवहारकारणत्वालाभेन पुनरुद्देश्यासिद्धिः । तदभाववदवृत्तित्वरूपस्य तस्य विवक्षितत्वे सर्वत्वस्य केवलान्वयितया तदभावाप्रसिद्ध्याऽसंभव इति वाच्यम् । स्वाभाववद्वृत्तित्वसंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववद्धर्मावच्छिन्नविषयकव्यवहारत्वस्य संबन्धतया विवक्षितत्वेन दोषाभावात् । एतद्घटकस्योक्तसंबन्धस्य व्यधिकरणसंबन्धत्वेन संयोगेन प्रमेयत्वाभाववत् तेन संबन्धेन सर्वत्वाभावस्य संभवादसंभवासंभवात् । अथवा स्वव्यापकतत्कत्वरूपं व्याप्यत्वं विवक्षितमिति न कुचोद्यावकाशः । नचैवमपीश्वरेच्छादृष्टादावतिव्याप्तेरपरिहार इति वाच्यं । तत्रैव स्वव्या-

-यधर्मावच्छिन्नविषयकव्यवहारत्वत्वसंबन्धेन सर्वत्वं प्रति स्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वसंबन्धेन धर्मस्य व्यापकताया विवक्षितत्वेन कार्यसामान्यकारणेऽदृष्टादौ तादृशव्यवहारत्वावच्छिन्नकार्यताघटितव्यापकधर्मवत्त्वाभावादतिव्याप्त्ययोगात् । तथाच सर्वत्वव्याप्यधर्मावच्छिन्नविषयकव्यवहारत्वत्वव्यापकावच्छेदकताककार्यतानिरूपितकारणतावच्छेदकगुणत्वव्याप्यधर्मवत्त्वस्य विवक्षिततयोक्तदोषाणामनवकाशात्। नचैवमपि कण्ठताल्वाद्यभिघाते व्यवहारसामान्यकारणे अतिव्याप्तेः कः परिहार इति वाच्यम् । अत एव गुणपदं सार्थकम् । तस्य विशेषगुणपरत्वेनोक्तातिव्याप्तिवारकत्वात् । अन्यथा तद्वैफल्यं दुर्वारमित्यवधेयम् । वस्तुतस्तु व्यापकताघटकसंबन्धे कार्यता स्वप्रयोजककृतिमत्त्वसंबन्धावच्छिन्ना निवेशनीया । तथाच नातिव्याप्तिः । तथाहि । अवच्छेदकतासंबन्धेन व्यवहारं प्रति समवायसंबन्धेन कण्ठताल्वाद्यभिघातः कारणमिति शरीरनिष्ठप्रत्यासत्त्या तयोः कार्यकारणभावः । ज्ञानशब्दयोस्तु स्वप्रयोजककृतिमत्त्वसंबन्धेन शब्दं प्रति समवायेन ज्ञानं कारणमित्यात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावः । तथाचावच्छेदकतासंबन्धावच्छिन्नकार्यतानिरूपितकारणतायाः कण्ठताल्वाद्यभिघाते सत्त्वेऽपि स्वप्रयोजककृतिमत्त्वसंबन्धावच्छिन्नकार्यतानिरूपितकारणताया अभिघातेऽभावान्नातिव्याप्तिः। नचैवमपि स्वप्रयोजककृतिमत्त्वसंबन्धेन शब्दं प्रति स्वाश्रयावच्छिन्नत्वसंबन्धेनाभिघातः कारणमिति विनिगमनाविरहप्राप्तमात्मनिष्ठप्रत्यासत्त्या कार्यकारणभावमूरीकृत्योक्तसंबन्धावच्छिन्नकार्यतानिरूपितकारणताया अप्यभिघाते सत्त्वादतिव्याप्तिस्तदवस्थैवेति वाच्यम् । कारणतायामपि

समवायसंबन्धावच्छिन्नत्वस्य निवेशात् । अभिघातनिष्ठकारणतायास्तु स्वाश्रयावच्छिन्नत्वसंबन्धेनावच्छेदादतिव्याप्तेरनवकाशादिति । इत्थंच सर्वत्वव्याप्यधर्मावच्छिन्नविषयकव्यवहारत्वत्वव्यापकावच्छेदकताकस्वप्रयोजककृतिमत्त्वसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्न कारणतावच्छेदकगुणत्वव्याप्यधर्मवत्त्वमिति पर्यवसितार्थः । नचैवमप्युन्मत्तप्रलापादिषु बुद्धिपूर्वकत्वाभावादसंभवो दुर्वार । तत्परित्यागे सर्वव्यवहारकारणत्वालाभेनासङ्गतिरेवेति वाच्यम् । व्यवहारस्य प्रयत्नपूर्वकत्वेन प्रयत्नस्य च ज्ञानेच्छापूर्वकत्वनियमेन तत्रापि पूर्वं बुद्धेस्सत्त्वादिति केचिन्मूलं व्याख्यातवन्तः । अत्रैचैतादृशबुद्धे कारणत्वाङ्गीकारे समान न्यायेन तज्जन्येच्छाकृत्योरपि कारणत्वापत्त्याऽतिव्याप्तिः । अपिचेच्छाकृत्योः कार्यसामान्यं प्रति कारणत्वेन तद्धतज्ञानस्यापि कार्यसामान्यकारणत्वौचित्येन व्यवहारसामान्यमात्रकारणत्वाभावाद् । किंचार्थं बुध्वा वाक्यरचनेति न्यायेनार्थज्ञानस्यैव व्यवहारसामान्यकारणत्वमसंभवभिया वाच्यम् । तथाचोन्मत्तप्रलापादिकमादायोक्तासङ्गतिर्दुर्वारैव । अपिच धर्मे गुणत्वव्याप्यत्वपरगुणपदवैयर्थ्यं गौरवं चेत्यनुशयवान् ज्ञानमिति लक्षणान्तरद्योतकं पदमुपादात् ग्रन्थकारः । नायमाशयस्तस्येति स्वकपोलकल्पितः । किन्तु स्वमूलव्याख्याता स्वयमेव दीपिकाकार ज्ञानत्वजातिमत्त्वरूपं लक्षणान्तरं कण्ठत एवोद्धुष्य तादृशजातौ प्रमाणाकांक्षायामनुव्यवसायगम्येत्येतावतांशेन तामपि निवारितवान् । अत एवं ज्ञायते । लक्षणकथनवेलायां सर्वव्यवहारहेतुरित्यादेर्लक्षणपरत्वेन वा लक्षणज्ञापकपरत्वेन वा न कोऽप्युपयोग इति । अन्यथा तादृशव्यवहारजनकतावच्छे-

दकनय। ज्ञानत्वजातिसिद्धिमप्रतिज्ञायानुव्यवसायगम्यत्वपर्यन्तानुधावनस्य निर्बीजत्वात् । अत्रानुव्यवसाये जातिभानं कथमिति चेदित्थम् । प्रतीत्यनुगतिस्तावदेकधर्मिविषयकत्वैकधर्मावच्छिन्नविषयकत्वान्यतरप्रयोज्येति नियमात्, पटं जानामि घटं जानामीत्याद्याकारिका ज्ञानांशे अनुगता प्रतीतिर्विभिन्नज्ञानरूपधर्म्यैक्यायोगेन ज्ञानत्वरूपैकधर्मावच्छिन्नविषयकत्वेनैवोपपद्यत इत्यनुगतज्ञानत्वसिद्धिः। तस्य च बाधकाभावाज्जातित्वं च। इमामेव प्रतीत्यनुगतिमनुरुध्य "येनेन्द्रियेण या व्यक्तिर्गृह्यत" इत्यादि नियमोऽपि प्रवर्तते । प्रतीतावनुगतत्वं च समानानुपूर्वीकशब्दोल्लेख्यत्वमिति कृतं पल्लवितेन ।

## ॥ संस्कारमात्रजन्यं ज्ञानं स्मृतिः

बोधः पूर्ववत् । अत्र संस्कारेतरसामान्याजन्यत्वनिवेशे स्मृतेरपि मनोजन्यत्वादसंभवः। बहिरिन्द्रियाजन्यत्वविवक्षायां आन्तर "सोऽहं सुखीत्या" दिप्रत्यभिज्ञायामतिव्याप्तिरिति चेदत्र केचित । संस्कारेतरविशिष्टान्यत्वं तदर्थः। वैशिष्ट्यं च स्वजन्यत्वस्वसामानाधिकरण्योभयसंबन्धेन। तथाच न मनोजन्यत्वमादायासंभवः । इतरपदेन मनसो ग्रहणेऽपि सत्यपि स्मृतौ तज्जन्यत्वे "अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यत" इत्युक्तत्वात्तदधिकरणाप्रसिद्ध्या सामानाधिकरण्यसंबन्धेन तद्विशिष्टत्वाभावात् । नापि सोऽहं सुखीत्यादिप्रत्यभिज्ञायामतिव्याप्तिः । उक्तोभयसंबन्धेन तत्र संयुक्तसमवायरूपसन्निकर्षविशिष्टत्वेन संस्कारेतरविशिष्टान्यत्वाभावादित्याहुः । तदपरे न क्षमन्ते । तद्बीजन्तु मन उपादायासंभवा संभवेप्यऽनुभवमादायासंभवस्य न परिहार इति । परेतु संस्कारेतर-

सन्निकर्षाजन्यत्वमित्यूचिरे। तत्र यद्यपीतरत्वेन सन्निकर्षस्यैव विशिष्य धृतत्वेन मन आदाय नासंभवः। सोऽहं सुखीतिप्रत्यभिज्ञायान्तु संस्कारेतरसंयुक्तसमवायरूपसन्निकर्षजन्यत्वेन तदजन्यत्वाभावादतिव्याप्तिश्च शक्यपरिहारा। नापि शब्दार्थोल्लंघनदोषः। मात्रपदस्थले स्वसजातीयमेव स्वेतरद्बोध्यत इति पूर्वमुक्तत्वेन संस्कारस्यापि सन्निकर्षत्वेन तत्सजातीयेतरसन्निकर्षस्य बोधसंभवात्। अथवा स्वभिन्न वप्रकारकतात्पर्यविषयेत्याद्यर्थस्य मात्रपदे पूर्वमुक्ततया तात्पर्यविषयतया सन्निकर्षस्यैव ग्रहणसंभवाच्च। तथाप्यात्ममनः संयोगरूपसंस्कारेतरसन्निकर्षजन्यत्वस्य स्मृतौ सत्त्वेनासंभवो दुष्परिहर एव। इतरे तु संस्कारेतरसाक्षादजन्यत्वं तदर्थः। साक्षात्त्वं चाव्यवधानम्। तथाच स्मृतेरुद्बुद्धसंस्कारे सत्यव्यवधानेनैव जननात् तदितरस्मिन् मनः संयोगानुभवादिके जाग्रद्दशायां सदा सत्यप्यव्यवधानेनाजननात् संस्कारेतरेण केनापि साक्षाज्जन्यत्वाभावान्नासंभवः। नाप्यतिव्याप्तिः। संस्कारेतरसंयुक्तसमवायादिरूपसन्निकर्षे सत्यव्यवधानेन प्रत्यभिज्ञाजननादिति प्राहुः। अथव ासंस्कारेतरेन्द्रियार्थसन्निकर्षविशिष्टान्यत्वं संस्कारमात्रजन्यत्वम्। वैशिष्ट्यं च स्वप्रयोज्यत्वस्वसामानाधिकरण्योभयसंबन्धेन। तथाच संयुक्तसमवायरूपेन्द्रियार्थसन्निकर्षवैशिष्ट्यस्य सोऽहं सुखीत्यादिप्रत्यभिज्ञायामुक्तोभयसंबन्धेन सत्त्वान्नातिव्याप्तिः। नापि मनः संयोगमादायासंभवः। मनसि सन्निकर्षत्वस्य तत्संयोगे च अथसन्निकर्षत्वस्याभावात्। तादृशसन्निकर्षविशिष्टान्यत्वस्य स्मृतौ समवात। यद्यप्यत्र लाघवादुक्तोभयसंबन्धेन संस्कारेतरेन्द्रियविशिष्टान्यत्वमव वक्तुमुचितम्। सामानाधिकरण्यनिवेशेन मन आदा-

येन्द्रियत्वनिवेशाच्च । तत्संयोगमनुभवंवाऽऽदायासंभवानवकाशात् । तथाऽऽप्यान्तरोक्तप्रत्यभिज्ञायामतिव्याप्तिभिया न तथा पर्यष्कारीन्यादयः परिष्कारस्य पंथानो द्रष्टव्या इति सर्वमवदातं ।

**॥ तद्वति तत्प्रकारकोऽनुभवो यथार्थः ॥**

सोऽस्यास्ति । अत्र तच्छब्दार्थः घटत्वादिधर्मः प्रकारीभूतः । अस्येत्यत्रेदंपदार्थो विशेष्यो घटादिः, षष्ठ्यर्थोऽधिकरणता, तस्यां प्रकृत्यर्थस्याऽऽधेयतासंबन्धेनान्वयः । अस्धात्वर्थः आधेयता, आख्यातार्थ आश्रयत्वं, षष्ठ्यर्थस्य धात्वर्थे, धात्वर्थस्य चाख्यातार्थे निरूपितत्वसंबन्धेनान्वयः । आख्यातार्थस्य स्वरूपसंबन्धेन तच्छब्दार्थे धर्मेऽन्वयः । तथाच तन्निष्ठाधिकरणतानिरूपिताधेयतानिरूपिताश्रयतावान् स इति विग्रहार्थः । तन्निष्ठाधेयतानिरूपिताधिकरणतावान् घटादिरिति समासार्थः । सप्तम्यर्थो विशेष्यत्वं, तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । स प्रकारो यस्य यत् पदार्थोऽनुभवः, षष्ठ्यर्थः प्रकारिता तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । तस्या निरूपितत्वसंबन्धेन प्रकारपदार्थैकदेशे प्रकारत्वेऽन्वयः । तथाच यन्निष्ठप्रकारितानिरूपितप्रकारतावान् स इति । विपरिवर्तने च तन्निष्ठप्रकारतानिरूपितप्रकारितावान् य इति बोधः । तत्र प्रकारतायां निरूपितत्वसंबन्धेन सप्तम्यर्थविशेष्यत्वस्यान्वयः । तथाच तन्निष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपितप्रकारितावदनुभवत्वमिति यथार्थानुभवस्य यथाश्रुतं लक्षणं । अत्र विशेष्यत्वप्रकारत्वयोर्निरूप्यनिरूपकभावनिवेशेन रङ्गरजतादिसमूहालंबनभ्रमेऽतिव्याप्तिविरहेऽपि विशेष्यत्वप्रकारत्वाद्यनि-

रूपके निर्विकल्पकप्रत्यक्षेऽव्याप्तिरित्यतो विशेष्यावृत्त्यप्रकारकत्वं लक्षणतया विवक्षणीयम् । तच्च विशेष्यावृत्तिप्रकारकं यद्यत् तत्तदन्यत्वम् । अत एकभ्रमात् विशेष्यावृत्तिप्रकारकादन्यत्वस्य भ्रमान्तरे सत्त्वेऽपि नातिव्याप्तिः । असर्वज्ञदुर्ज्ञेयत्वादिकन्तूत्तरत्र निर्वक्ष्यमाणानुगमान्निवारणीयम् । अत्र जातिर्जातिमतीत्यादिभ्रमेऽतिव्याप्तिः । तथाहि । विशेष्यावृत्तिप्रकारकत्वं नाम विशेष्यनिरूपितवृत्तित्वाभाववन्निष्ठप्रकारतानिरूपकत्वं । तत्र च वृत्तित्वं नहि येन केनचित्संबन्धेन । तथासति ह्रदो वन्हिमानिति भ्रमस्य प्रमात्वापत्तिः । तत्र प्रकारीभूतवन्हेः कालिकादिसंबन्धेन ह्रदरूपविशेष्यवृत्तित्वेन तदभाववन्निष्ठप्रकारतानिरूपकत्वाभावात् । अतः प्रकारतावच्छेदकसंबन्धेन विशेष्यवृत्तित्वं वाच्यम । इत्थं च प्रकृते प्रकारतावच्छेदकीभूतसमवायसंबन्धेन जातिरूपविशेष्यवृत्तित्वाप्रसिद्ध्या तदभावायोगेन विशेष्यावृत्तिप्रकारकं यद्यदित्यत्र यत्पदेनास्योपादातुमशक्यत्वादन्यभ्रममादाय तदन्यत्वस्यात्र सत्त्वादिति । अतो विशेष्यनिरूपितवृत्तित्वसामान्यस्य प्रकारतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसंबन्धेनाभावमादायातिव्याप्तिः परिहरणीया । स च संबन्धः प्रकृते व्यधिकरण इति संयोगेन गुणाद्यभाववत्तेन संबन्धेन जातिवृत्तित्वसामान्याभावः प्रसिद्ध एवेति नातिव्याप्तिः । यद्वा प्रकारताविशिष्टविशेष्यत्वानिरूपकानुभवत्वं प्रमात्वं । वैशिष्ट्यं च स्वनिरूपितत्वस्वावच्छेदकधर्मावच्छिन्न स्वावच्छेदकसंबन्धावच्छिन्न प्रतियोगितानिरूपकाभाववद्वृत्तित्वोभयसंबन्धेन । जातिर्जातिमतीत्यादिभ्रमे नातिव्याप्तिः । तत्र जातिनिष्ठप्रकारताविशिष्टविशेष्यतायाः सत्त्वात् । कथमिति चेदित्थम् ।

जातिनिष्ठप्रकारताया निरूपितत्वसंबन्धेन जातिनिष्ठविशेष्यतायां सत्त्वन-विप्रतिपन्नम् । द्वितीयसंबन्धश्च स्वं जातिनिष्ठा प्रकारता स्वावच्छेदकं जातित्वं स्वावच्छेदकसंबन्धः समवायः तदुभयावच्छिन्नप्रतियोगिताकश्च समवायेन जातिर्नास्तीति प्रतीतिसाक्षिकोऽभावः तद्वती जातिः तद्वृत्तित्वं विशेष्यतायामिति प्रकारताविशिष्टविशेष्यतानिरूपकत्वनिर्वाहः । न चैवं सतीदं रजतमिति संसर्गभ्रमेऽतिव्याप्तिः । तत्र प्रकारताया निरवच्छिन्नत्वेन स्वावच्छेदकधर्माप्रसिद्ध्या तत्प्रकारताया उपात्तुमशक्यत्वेनान्यप्रकारताविशिष्टविशेष्यत्वानिरूपकत्वस्य तत्र सत्त्वादिति वाच्यम्। स्वविशिष्टप्रतियोगितानिरूपकाभाववद्वृत्तित्वस्य द्वितीयसंबन्धत्वेन विवक्षितत्वात् । प्रतियोगितायां स्ववैशिष्ट्यं च स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्वसामानाधिकरण्यैतत्त्रितयसंबन्धेन । तथा-चोक्तस्थलेऽप्रसिद्ध्या प्रतियोगितायां स्वावच्छेदकावच्छिन्नत्वासंभवेऽपि स्वानवच्छेदकानवच्छिन्नत्वसंभवान्नातिव्याप्तिः । नच स्वानवच्छेदकत्वं स्वावच्छेदकभिन्नत्वं तथाचाप्रसिद्धिनिबन्धनो दोषो न निवारित इति वाच्यम् । स्वानवच्छेदकत्वपदेनावच्छेदकतासंबन्धेन स्वाभाववत्त्वविवक्षणेन तस्य व्यधिकरणसंबन्धत्वेन दोषाभावात् । न चैवमपि रजतत्वनिष्ठ-प्रकारताया निरवच्छिन्नत्वेन प्रतियोगितायाश्चावच्छिन्नत्वनियमेन स्वा-नवच्छेदकावच्छिन्नत्वस्यैव प्रतियोगितायां सत्त्वेन तदनवच्छिन्नत्वाभा-वात्तादृशप्रतियोगित्वाप्रसिद्ध्या स्वपदेन रजतत्वप्रकारताया उपादानासंभवेनान्योपादाने तद्विशिष्टविशेष्यत्वानिरूपकत्वस्यास्मिन् भ्रमे सत्त्वात् अतिव्याप्तिर्दुर्वारैवेति वाच्यम् । उक्तत्रितयसंबन्धेन प्रकारताविशिष्टत्व-

स्थाने प्रकारतावृत्तित्वस्य निवेशनेन दोषाभावात् । प्रकारतानवच्छेदकानवच्छिन्नत्वस्य प्रतियोगितायामभावेऽपि प्रतियोगितानवच्छेदकानवच्छिन्नत्वस्य प्रकारतायामबाधात् । अथवा धर्मविशिष्टविशेष्यत्वानिरूपकानुभवत्वं प्रमात्वम् । वैशिष्ट्यं च स्वसमानाधिकरणप्रकारतानिरूपितत्वप्रकारतावच्छेदकसंबन्धावच्छिन्नस्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वोभयसंबन्धेन । आहोस्वित् । विशेष्यताविशिष्टप्रकारत्वानिरूपकत्वं तत् । वैशिष्ट्यं च स्वनिरूपितत्वस्वसमानाधिकरणाभावीयप्रतियोगिताविशिष्टत्वोभयसंबन्धेन । प्रतियोगितावैशिष्ट्यं चोक्तत्रितयसंबन्धेन । अथवा धर्मविशिष्टप्रकारत्वानिरूपकत्वं प्रमात्वं । वैशिष्ट्यं च स्वावच्छिन्नविशेष्यतानिरूपितत्वस्वसमानाधिकरणाभावीयप्रतियोगिताविशिष्टत्वोभयसंबन्धेन । प्रतियोगितावैशिष्ट्यं च पूर्ववत् । अत्र धर्मपदेन विशेष्यतावच्छेदकधर्मो ज्ञेयः । यद्वा संसर्गविशिष्टान्यप्रकारत्वानिरूपकानुभवत्वं तत् । वैशिष्ट्यं च स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्वस्वनिष्ठसंसर्गतानिरूपितत्वैतत्त्रितयसंबन्धेन । अथवा संसर्गताविशिष्टविशेष्यत्वानिरूपकानुभवत्वं तत् । वैशिष्ट्यं च स्वनिरूपितत्व, स्वाश्रयानुयोगिभिन्ननिष्ठत्व-स्वाश्रयप्रतियोगिभिन्ननिष्ठप्रकारतानिरूपितत्वैतदन्यतरोभयसंबन्धेन । अथवा धर्मविशिष्टप्रकारत्वानिरूपकानुभवत्वं तत् । वैशिष्ट्यं च स्वावच्छिन्नसंसर्गतानिरूपितत्व, स्वावच्छिन्ननिरूपितानुयोगिताऽसमानाधिकरणविशेष्यतानिरूपितत्वस्वावच्छिन्ननिरूपितप्रतियोगित्वासमानाधिकरणत्वैतदन्यतरोभयसंबन्धेनेत्यादिकं सकलभ्रमवारकं निखिलप्रमासंग्राहकं लक्षणं परिष्करणीयम् । एवं विशेष्यावृत्तिप्रकारकं यद्यत्तदन्यत्वमिति प्रथमत

उक्तस्य विशेष्यवृत्तित्वनिष्ठप्रकारतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववन्निष्ठप्रकारताकान्यत्वेन परिष्कृतस्याप्यनुगमः संभवति । तथाहि । ज्ञानविशिष्टान्यानुभवत्वं तत् । वैशिष्ट्यं तादात्म्यस्वविशेष्यवृत्तित्वनिष्ठस्वीयप्रकारतावच्छेकसंबन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववन्निष्ठप्रकारताकत्वोभयसंबन्धेनेत्यलम् । तत्र दिङ्मात्रप्रदर्शनाय प्रथमोक्तप्रकारताविशिष्टविशेष्यत्वानिरूपकानुभवत्वकल्पे पदानां कृत्यं विचार्यते । अत्र वैशिष्ट्यं स्वनिरूपितत्वस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वोभयसंबन्धेनेत्युक्त । तत्र प्रथमसंबन्धानिवेशेऽसंभवः । अयं घट इति प्रमायां अयं पट इति भ्रमीयपटत्वनिष्ठप्रकारताविशिष्टविशेष्यत्वनिरूपकत्वस्यैव सत्त्वात् । तथाहि । स्वं पटत्वनिष्ठाप्रकारता स्वावच्छेदकं पटत्वत्वं तदवच्छिन्नप्रतियोगिताको योऽभावः पटत्वंनास्तीति प्रतीतिसाक्षिकाभाव. तद्वानयं घट इत्यत्रेदंपदार्थः तद्वृत्तित्वस्य विशेष्यतायां तन्निरूपकत्वस्य च प्रमायां सत्त्वात् । स्वनिरूपितत्वनिवेशे चायं पट इति ज्ञानीयपटत्वनिष्ठप्रकारतानिरूपितत्वस्यायं घट इति ज्ञानीयविशेष्यतायामभावेनोक्तोभयसंबन्धेन विशेष्यतायां प्रकारतावैशिष्ट्याभावान्नोक्तदोषः । स्वनिरूपितत्वमात्रनिवेशेऽपि अयं घट इति प्रमायां इदंनिष्ठविशेष्यतायां घटत्वनिष्ठप्रकारताविशिष्टत्वस्य सत्त्वात्पुनः स एव दोष इत्युभयोपादानम् । एवमप्रसिद्धिवारणार्थं स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्थाने निवेशितस्ववृत्तिप्रतियोगिताकाभावघटितलक्षणे यथाश्रुतोऽयं समन्वयप्रकारः । अत्र वृत्तित्वं स्वानवच्छेदकान-

वच्छिन्नत्व स्वावच्छेदकसंबन्धावच्छिन्नत्व स्वसामानाधिकरण्यैतत्त्रितय-संबन्धेनेत्युक्तम्। यत्र वृत्तित्वं विवक्षितं तदेव प्रतियोगित्वं स्वपदार्थः। तथाच प्रकारतापदेनेदं रजतमिति ज्ञानीया रजतत्वनिष्ठा प्रकारता तद्विशिष्टा इदंनिष्ठा विशेष्यता तन्निरूपकत्वं तद्भ्रमे अनिरूपकत्वं प्रमायामिति। प्रकारतावैशिष्ट्यमपि इदंनिष्ठविशेष्यतायां विद्यते। रजतत्व निष्ठप्रकारतानिरूपितत्वं तावत्सर्वसंमतं। द्वितीयसंबन्धोऽप्येवमुपपादनीयः। तथाहि। स्वं रजतत्वनिष्ठा प्रकारता तद्वृत्तिर्या प्रतियोगिता समवायेन रजतत्वं नास्तीति प्रतीतिसाक्षिकाभावीया तन्निरूपकाभाववानिदमर्थस्तद्वृत्तित्वं विशेष्यतायामिति। प्रतियोगितायां स्ववृत्तित्वं कथमिति चेदित्थम्। स्वं प्रतियोगित्वं स्वावच्छेदकं रजतत्वत्वं तदनवच्छेदकमुदासीनं तदनवच्छिन्नत्वं रजतत्वनिष्ठप्रकारतायां, एवं स्वं प्रतियोगित्वं, तदवच्छेदकसंबन्धः समवायः, तदवच्छिन्नत्वं प्रकारतायां। एवं प्रकारत्वप्रतियोगित्वयोरजतत्वरूपैकार्थनिष्ठत्वेन सामानाधिकरण्यं सुतरामेव वर्तते। तथाचोक्तत्रितयसंबन्धेन प्रतियोगितायां प्रकारतावृत्तित्वमक्षतमिति। एवमन्यत्रापि। अत्र स्वानवच्छेदकानवच्छिन्नत्वस्वावच्छेदकसंबन्धावच्छिन्नत्वसामानाधिकरण्यानां त्रयाणां संबन्धानां मध्ये प्रथमसंबन्धानिवेशेऽयं घट इति प्रमायामतिव्याप्तिः। तथाहि। अत्र घटत्वनिष्ठप्रकारता निरूपितत्वेन विशेष्यतायां विद्यते। एवं स्वं घटत्वनिष्ठाप्रकारता तद्वृत्तिश्च समवायेन घटत्वपटत्वोभयं नास्तीति प्रतीतिसाक्षिकाभावीया प्रतियोगिता तन्निरूपकाभाववदिदं पदार्थवृत्तित्वाच्च विशेष्यताया इति। प्रतियोगितायां प्रकारता-

वृत्तित्वं चेत्थम । स्वं उभयाभावीयप्रतियोगिता तदवच्छेदकसंबन्धः समवायः तदवच्छिन्नत्वं घटत्वनिष्ठप्रकारतायां । एवं प्रतियोगिताया उभयनिष्ठत्वेन घटत्वेऽपि सत्त्वेन सामानाधिकरण्यमप्यस्ति । अतः प्रथमसंबन्धनिवेशः । यद्यपि प्रकारताया निरवच्छिन्नत्वेन स्वपदग्राह्यप्रतियोगितानवच्छेदकानवच्छिन्नत्वमप्यस्तीत्युक्तदोषतादवस्थ्यम् । तथाऽपि स्वानवच्छेदकानवच्छिन्नत्वपदेन स्वपर्याप्त्यधिकरणापर्याप्तधर्मपर्याप्त्यधिकरणावृत्तित्वस्य विवक्षिततया दोषाभावात् । प्रकृते स्वं प्रतियोगिता तत्पर्याप्त्यधिकरणमुभयं तत्रापर्याप्तो यो धर्मः घटत्वत्वरूपस्तत्पर्याप्त्यधिकरणं घटत्वं तद्वृत्तित्वस्यैव प्रकारतायां सत्त्वेन तदवृत्तित्वायोगेन दोषाभावात् । द्वितीयसंबन्धानिवेशेऽयं घट इत्यादिप्रमास्वसंभवः । तथाहि । प्रकारतानिरूपितत्वं विशेष्यतायां विद्यते । एवं स्ववृत्तिप्रतियोगितानिरूपकाभाववद्वृत्तित्वमपि । स्वं घटत्वनिष्ठप्रकारता स्ववृत्तिर्या प्रतियोगिता संयोगेन घटत्वं नास्तीति प्रतीतिसाक्षिकाभावीया तन्निरूपकोऽभावः संयोगेन घटत्वं नास्तीतिप्रतीतिसाक्षिकः तद्वानिदमर्थः तद्वृत्तित्वं विशेष्यतायां तन्निरूपकत्वं प्रमायामिति । तादृशप्रतियोगितायां प्रकारतावृत्तित्वमित्थम् । स्वं प्रतियोगिता तस्याः घटत्वनिष्ठत्वेन सामानाधिकरण्यं विद्यते । एवं प्रकारताया निरवच्छिन्नत्वेन स्वानवच्छेदकानवच्छिन्नत्वमपि वर्तत इत्यतो द्वितीयसंबन्धनिवेशः । निविष्टे च तस्मिन् स्वपदग्राह्यप्रतियोगितावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नत्वस्य समवायावच्छिन्नायामस्यां प्रकारतायामभावादिति । तृतीयसंबन्धानिवेशेऽप्यसंभवः । तथाहि । अयं घट इति ज्ञानीयेदंनिष्ठविशेष्यतायां

घटत्वनिष्ठप्रकारतानिरूपितत्वं विद्यते । एवं स्ववृत्तिप्रतियोगितानिरूपकाभाववद्वृत्तित्वमपि वर्तते । कथमिति चेदित्थम् । स्वं घटत्वनिष्ठा प्रकारता स्ववृत्तिश्च समवायेन पटत्वंनास्तीतिप्रत्यक्षिकाभावीया प्रतियोगिता तन्निरूपकाभाववद्वृत्तित्वस्यापि विशेष्यतायां सत्त्वेन संबन्धद्वयेन प्रकारताविशिष्टविशेष्यतानिरूपकत्वस्याप्यस्यां प्रमायां सत्त्वात् । पटत्वनिष्ठप्रतियोगितायाः घटत्वनिष्ठप्रकारतावृत्तित्वं कथमिति चेदेवम् । स्वपद्ग्राह्यपटत्वनिष्ठप्रतियोगितावच्छेदकसमवायसंबन्धावच्छिन्नत्वस्य घटत्वनिष्ठप्रकारतायां सत्त्वात् । एवं स्वानवच्छेदकानवच्छिन्नत्वमपि । स्वं पटत्वनिष्ठा प्रतियोगिता तदवच्छेदकं पटत्वत्वं तदनवच्छेदकमुदासीनं तदनवच्छिन्नत्वमपि घटत्वनिष्ठप्रकारताया निरवच्छिन्नत्वेनास्तीति स्वानवच्छेदकानवच्छिन्नत्वस्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन पटत्वनिष्ठप्रतियोगिता घटत्वनिष्ठप्रकारतावृत्तिर्भवतीति सामानाधिकरण्यरूपतृतीयसंबन्धनिवेशः । तथाच पटत्वनिष्ठप्रतियोगितासामानाधिकरण्यस्य घटत्वनिष्ठप्रकारतायामभावान्नासंभवः । पटत्वनिष्ठप्रतियोगितायाः उक्तत्रितयसंबन्धेनोक्तरीत्या घटत्वनिष्ठप्रकारतावृत्तित्वाभावादिति । अत्र स्वानवच्छेदकानवच्छिन्नत्वपदेन विवक्षितस्वपर्याप्त्यधिकरणापर्याप्तधर्मपर्याप्त्यधिकरणावृत्तित्वस्य निवेशे तेनैव पटत्वनिष्ठप्रतियोगितामादायासंभववारणसंभवेन तत्कल्पे सामानाधिकरण्यं न देयमेव । तथाहि । स्वं पटत्वनिष्ठा प्रतियोगिता तत्पर्याप्त्यधिकरणं पटत्वं तत्र पर्याप्तं पटत्वं अपर्याप्तो धर्मः घटत्वत्वं तत्पर्याप्त्यधिकरणं घटत्वं तद्वृत्तित्वस्यैव प्रकारतायां सत्त्वेन तादृशधर्मपर्याप्त्यधिकरणावृत्तित्वरूपद्वितीयसंबन्धाभावेन

घटत्वनिष्ठप्रकारतावृत्तित्वस्य पटत्वनिष्ठप्रकारतायामभावेन सामानाधिकरण्याभावेऽपि दोषतयोक्तासंभवस्य वारितत्वादिति विभावनीयमितिदिक् । एवमन्यान्यलक्षणसमन्वयप्रकारस्तद्धटकपदानां कृत्यानि च स्वयमूह्यानि । ग्रन्थगौरवभिया नेह तानि प्रदर्शितानीत्यवधेयम् । अत्र विशेष्यावृत्त्यप्रकारकत्वलक्षणे दीपिकायामभिहिता घटे घटत्वमिति प्रमायामव्याप्तिः प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वादिलक्षणे वृक्षः कपिसंयोगीति प्रमायामव्याप्तिश्च प्रसज्यते । सा च विशेष्यावृत्तित्वस्थाने विशेष्यानुयोगिकसंबन्धाप्रतियोगित्वस्योत्तरलक्षणे च प्रकारतावैशिष्ट्यघटकसंबन्धघटकीभूताभावे प्रतियोगिवैयधिकरण्यस्य च निवेशाद्वारणीया । घटे घटत्वमित्यत्र प्रकारीभूतघटस्य विशेष्यावृत्तित्वेऽपि विशेष्यानुयोगिकसंबन्धाप्रतियोगित्वाभावात् । कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्याभावाच्च नाव्याप्तिः । प्रतियोगिवैयधिकरण्यपरिष्कारश्चान्यत्रोक्तोऽनुसन्धेय इति सर्वं चतुरस्रम् ।

**॥ तदभाववति तत्प्रकारकानुभवोऽयथार्थः ॥**

अत्र विशेष्यावृत्त्यप्रकारकत्वस्थाने विशेष्यावृत्तिप्रकारकत्वं प्रकारताविशिष्टविशेष्यत्वानिरूपकत्वस्थाने तादृशविशेष्यत्वनिरूपकत्वं निवेश्यानुभवत्वसहितं सर्वमप्युक्तमेव लक्षणतया ज्ञेयम् । अथ वृक्षः कपिसंयोगीति प्रमायामतिव्याप्तिः । तत्र विशेष्ये वृक्षे प्रकारीभूतसंयोगाभावस्य सत्त्वादिति । यदि संयोगाभावस्य प्रतियोगिवैयधिकरण्याभावात् संबन्धघटकाभावे च प्रतियोगिवैयधिकरण्यं निवेश्योक्तातिव्याप्तिः वार्यते तदा मूलावच्छिन्नो वृक्षः कपिसंयोगी उत्पत्तिकालीनो घटो

गन्धवानित्यादिभ्रमेऽव्याप्तिः । तत्र लक्षणघटकीभूताभावस्य प्रतियोगि-वैयधिकरण्याभावादिति चेदत्र केचित् । प्रकारताविशिष्टविशेष्यत्वनि-रूपकानुभवत्वमेव लक्षणम् । वैशिष्ट्यं स्वनिरूपितत्वस्वावच्छेदकावच्छि-न्नप्रतियोगिताकाभावविशिष्टत्वोभयसंबन्धेन । अभाववैशिष्ट्यं स्वाव-च्छेदकदेशावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन । तथाचाभावे प्रति-योगिवैयधिकरण्यानिवेशान्नोक्ताव्याप्तिः । अभावावच्छेदकावच्छिन्नत्वस्य विशेष्यतायां निवेशेन न वृक्षः कपिसंयोगीति प्रमायामतिव्याप्तिः । तत्र वृक्षनिष्ठविशेष्यतायाः कपिसंयोगाभावावच्छेदकमूलानवच्छिन्नत्वादि-ति । नचैवं सति निरवच्छिन्नविशेष्यताघटितभ्रमेष्वव्याप्तिः । तत्र संबन्धघटकीभूतस्वावच्छेदकावच्छिन्नत्वसंबन्धेनाभाववैशिष्ट्यायोगादिति वाच्यम् । तत्र पूर्ववत् अभाववैशिष्ट्याघटितमेव लक्षणं करणीयमिति न दोषः । नच लक्षणभेदापत्तिः । इष्टापत्तेः । अत एव मुक्तावलीकारा-दयोऽपि भ्रमनिरूपणावसरे एवमेव लक्षणद्वयं परिष्कृत्य लक्ष्यभेदेन लक्षणभेदस्येष्टापत्तिमभ्युपयन्तीत्याहुः । तच्चिन्त्यम् । स्वावच्छेदकाव-च्छिन्नत्वघटितसंबन्धेनाभाववैशिष्ट्याघटितलक्षणस्य वृक्षः कपिसंयोगीति-प्रमायामतिव्याप्तेरवारणात् । स्वावच्छेदकावच्छिन्नत्वस्थाने लक्षणान्तरे अभावे प्रतियोगिवैयधिकरण्यं निवेश्य तदुभयान्यतरवत्त्वस्य लक्षणत्व-विवक्षणेऽपि अन्यतरत्वस्य भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपत्वेन भेदद्वयमध्ये कस्य प्रथमतो निवेश इत्यत्र नियामकाभावेन गुरुतरलक्षण-द्वयापत्तेः । अतः स्वावच्छेदकावच्छिन्नत्वस्थाने स्वानवच्छेदकानवच्छि-न्नत्वं निवेश्यैकमेवोभयसाधारणं लक्षणं करणीयम् । अत्र स्वानवच्छेद-

कानवच्छिन्नत्वनिवेशेऽपि दोषशङ्कायां साऽपि पूर्ववन्निरसनीयेत्यादिकं बहुतरमूहनीयम् ।

॥ यथार्थानुभवश्चतुर्विधः ॥

नन्विदमसङ्गतं । प्रत्यक्षादेर्यथार्थानुभवप्रभेदत्वे "इदंरजतमि"ति प्रत्यक्षस्य "ह्रदो वन्हिमानि"त्यनुमितेः "अग्निना सिंचती"ति वाक्यजन्यबोधस्य एवमगवये गवयपदवाच्यत्वज्ञानरूपाया उपमितेश्च प्रत्यक्षादिज्ञानप्रभेदत्वानुपपत्तिः । यथार्थायथार्थानुभवेष्वपरिगणितत्वादिति चेत् भ्रान्तोऽसि । यथार्थानुभवस्य चातुर्विध्ये अयथार्थानुभवस्यापि चातुर्विध्यं तुल्यन्यायेन सेत्स्यतीति ग्रन्थकार उन्नांचकार ।

॥ यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् ॥

अत्र कार्यपदानुपादाने उद्देश्यविधेयभावमहिम्ना उद्देश्यतावच्छेदकीभूते यत्समवेतत्वे विधेयीभूतोत्पत्तिव्याप्यत्वं लभ्यते तस्यच बाधः स्यात् । तथाहि । अत्र वाक्ये यत्समवेतमुद्दिश्य उत्पत्तिर्विधीयत इति उद्देश्यतावच्छेदकीभूतयत्समवेतत्वे उत्पत्तिव्याप्यत्वलाभे यत्रयत्र यत्समवेतत्वं तत्रतत्रोत्पत्तिरिति नियमप्रसक्तौ यत्समवेतत्वस्य कपालत्वादिजातौ सत्त्वेऽप्युत्पत्तेरभावेन व्याप्यत्वभङ्गः स्यादिति कार्यपदोपादानम् । तथाच कार्यत्वस्याप्युद्देश्यतावच्छेदकत्वेन जातौ उद्देश्यतावच्छेदकत्वस्यैवाभावेन न नियमानुपपत्तिः । यद्यपि "उद्देश्यविधेयभावस्थलेऽसति बाधके उद्देश्यतावच्छेदके विधेयव्याप्यत्वं भासत" इति नियमात् बाधकाभाव एव व्याप्यत्वं भासते नेतरथा। तथाच प्रकृते बाधकसद्भावात्सामानाधिकरण्यमात्रं भासते न व्याप्यव्यापकभाव इति कार्यपदं व्यर्थम् । तथापि

स्फुटप्रतिपत्त्यर्थकतया वाऽकार्ये उत्पत्तिर्नास्तीति प्रदर्शनार्थतया वा व्याख्याय कथंचित्सार्थक्यमुपपादनीयमित्यवधेयम् । "यत्समवेतं कार्यमि" त्यस्य। स्वानुयोगिकसमवायप्रतियोगित्वसंबन्धेन यद्विशिष्टं कार्यमित्यर्थः। उत्पत्तिर्नामाऽऽद्यक्षणसंबन्धः । स चाऽऽद्यक्षणवृत्तित्वरूपः विधेयीभूततादृशोत्पत्तावुद्देश्यतावच्छेदकीभूतयन्निष्ठावच्छेदकतानिरूपकत्वमुद्देश्यविधेय भावमहिमलभ्यमिति यन्निष्ठावच्छेदकताकाद्यक्षणनिरूपितवृत्तितावत्कार्यमिति वाक्यार्थ. संपद्यते । आद्यक्षणरूपकालवृत्तित्वे यत्पदार्थावच्छिन्नत्वं च "देशे वृत्तौ कालस्यावच्छेदकत्वं काले वृत्तौ देशस्यावच्छेदकत्वं" इति नियमसिद्धमिति कपालरूपदेशस्यावच्छेदकत्वं नानुपपन्नम् । विपरिवर्तने च घटादिरूपकार्यनिष्ठाद्यक्षणवृत्तित्वनिरूपितस्वानुयोगिकसमवायप्रतियोगित्वसंबन्धावच्छिन्नावच्छेदकतावत्त्वं समवायिकारणस्य लक्षणमिति पर्यवसितम् । अत्रावच्छेदकतायां स्वानुयोगिकसमवायप्रतियोगित्वसंबन्धावच्छिन्नत्वानुपादाने घटादिरूपकार्यनिष्ठकालनिरूपिताधेयतायां स्वानुयोगिकसंयोगप्रतियोगित्वसंबन्धेन भूतलादेरप्यवच्छेदकतया भूतलादावतिव्याप्तिस्स्यादतस्तत्संबन्धनिवेशः । नच "उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठती"ति न्यायेनाद्यक्षणे भूतलघटयोः गुणात्मकसंयोगसंबन्धायोगेनासंबद्धे भूतलेऽवच्छेदकत्वाभावान्नातिव्याप्तिरिति वाच्यम् । तर्हि स्वानुयोगिककालिकप्रतियोगित्वसंबन्धेन कालस्याप्यवच्छेदकतया तत्रातिव्याप्तिप्रसङ्गात्, अतः तत्संबन्धो निवेशित इति सन्तोष्टव्यम् ।

**॥ यथा तन्तवः पटस्य ॥**

उदाहरणं यथापदार्थः । तच्चोक्तरूपप्रकारकनिश्चयविशेष्यतावत् । उक्तरूपं च तादृशावच्छेदकतावत्त्वम् । पटस्येति षष्ठ्यर्थः कारणत्वं । तस्य तन्तुष्वन्वयः । तथाच पटनिरूपितकारणतावन्तस्तन्तवः यथा पटनिष्ठाद्यक्षणवृत्तितानिरूपितस्वानुयोगिकसमवायप्रतियोगित्वसंबन्धावच्छिन्नावच्छेदकत्वरूपोक्तरूपप्रकारकनिश्चयविशेष्यतावद्भिन्ना इति वाक्यार्थः ।

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत्कारणमसमवायिकारणम् ।**

कार्यप्रतियोगिकभेदकारणप्रतियोगिकभेदोभयावच्छिन्नप्रतियोगिताकभेदवद्यत्किंचिदर्थनिरूपितसमवायघटितसामानाधिकरण्यवदभिन्नकारणतावान् असमवायिकारणमिति व्यवहारविषय इति विशिष्टवाक्यजन्यो बोधः । असमवायिकारणलक्षणं तावद्विविधम् । समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वरूपम् । समवायसंबन्धावच्छिन्नकार्यतानिरूपितस्वसमवायिसमवेतत्वसंबन्धावच्छिन्नकारणत्वरूपं चेति । प्रथमकल्पे कार्यतायां समवायसंबन्धावच्छिन्नत्वानिवेशे भगीरथप्रयत्नादावतिव्याप्तिः । स्वजनकादृष्टवत्त्वसंबन्धेन गङ्गावतरणं प्रति समवायसंबन्धेन तत्प्रयत्नस्य हेतुत्वात् । तथाच तत्र कार्यतायाः स्वजनकादृष्टवत्त्वसंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावान्नातिव्याप्तिः । समवायसंबन्धावच्छिन्नकार्यतानिरूपित तादात्म्यसंबन्धावच्छिन्नकारणतावति समवायिकारणेऽतिव्याप्तिवारणाय कारणतायां तन्निवेशः । द्वितीयकल्पे कारणतायां स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नत्वानिवेशे समवायिकारण एवातिव्याप्तिः । कार्यतायां सम-

वायसंबन्धावच्छिन्नत्वानिवेशे इन्द्रियावयवविषयावयवसंयोगेऽतिव्याप्तिः। तथाहि। प्राचीनमते प्रत्यक्षसामान्यं प्रति तस्यापि कारणत्वात्। कार्यकारणयोश्च सामानाधिकरण्यावश्यंभावात्। तथाच विषयतासंबन्धेन प्रत्यक्षं प्रति स्वसमवायिसमवेतत्वसंबन्धेन तत्संयोगः कारणम्। उक्तसंबन्धेन कार्याधिकरणे विषये तेन संबन्धेन स विद्यते। यथा। स्वं इन्द्रियावयवविषयावयवसंयोगः स्वसमवायी विषयावयवः तत्समवेतत्वं विषये। कारणं येन संबन्धेन कार्याधिकरणे विद्यते तत्संबन्धस्यैव कारणतावच्छेदकत्वात्। अतस्तत्रातिव्याप्तिवारणाय कार्यतायां समवायसंबन्धावच्छिन्नत्वनिवेशः। तथाच तदीयकार्यतायाः विषयतासंबन्धावच्छिन्नत्वेन समवायसंबन्धावच्छिन्नत्वाभावान्नातिव्याप्तिः। अत्र तुरीतन्तुसंयोगादावतिव्याप्तिवारणप्रकारः मुक्तावल्यादौ द्रष्टव्य इत्यवधेयम्।

॥ तदुभयभिन्नं कारणं निमित्तकारणम् ॥

नच निमित्तकारणत्वेनाभिमतेषु प्रागभावादिषु कस्याप्यसमवायिसमवायिकारणत्वयोरभावेन लक्षणसमन्वयेऽपि घटादिनिमित्तकारणेषु दण्डादिष्वव्याप्तिः। स्वगतरूपसमवायिकारणत्वस्य तत्र सत्त्वेन तद्भिन्नत्वायोगात्। किंच समवायिकारणकपालादावतिव्याप्तिः। एकं नोभयमिति प्रतीत्या घटे घटपटोभयभेदवत् प्रकृतेऽपि समवायिकारणासमवायिकारणोभयभेदस्य कपाले सत्त्वात्। घटसमवायिकारणभिन्नत्वे सति घटासमवायिकारणभिन्नत्वे सति घटकारणत्वमिति विशिष्य लक्षणविवक्षयोक्तदोषवारणे पुनरननुगम इति वाच्यम्। समवायिकारणताभिन्नासमवायिकारणताभिन्नकारणत्वं तत्। नचैवमुक्तदोषः। यथा

पुरुषैक्येऽपि तद्गतयोर्जारत्वचोरत्वयो परस्परं भेदः । एवं दण्डनिष्ठयो घटकारणत्वस्वगतरूपकारणत्वयोरपि भेदात् । अथवा किंचिद्व्यक्तिविशिष्टत्वं निमित्तकारणत्वं । वैशिष्ट्यं च स्वनिरूपितसमवायिकारणत्वशून्यत्वस्वनिरूपितासमवायिकारणत्वशून्यत्वस्वनिरूपितकारणत्वैतत्त्रितयसंबन्धेन । यद्वा किंचिद्धर्मविशिष्टत्वं तत् । वैशिष्ट्यं च स्वावच्छिन्नकार्यतानिरूपितसमवायिकारणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वावच्छिन्नकार्यतानिरूपितासमवायिकारणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वावच्छिन्नकार्यतानिरूपितकारणतावत्त्वैतत्त्रितयसंबन्धेन । अत्र समवायिकारणासमवायिकारणोदासीनेषु यथाक्रममतिव्याप्तिवारणाय त्रयाणां संबन्धानां निवेशः । अत्र धर्मपदेन कार्यतावच्छेदकीभूतघटत्वादिधर्मो ग्राह्यः । भेदश्च स्वावच्छिन्नकार्यतानिरूपितसमवायिकारणत्वादिसंबन्धेन स्ववन्नेति प्रतीतिसाक्षिको ज्ञेयः । समन्वयप्रकारश्च सुगम इति न प्रदश्यते ।

**॥ तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

अत्र तानि च तानि एतानि च तदेतानि । तदेतानि च तानि त्रिविधकारणानि चेति विग्रहः । उक्तरूपवद्बुद्धिस्थत्रिविधकारणमध्ये इति तदर्थः । त्रिविधानि त्रित्वसंख्याविशिष्टविभाजकधर्मनिष्ठाधेयतानिरूपकानि षष्ठ्यर्थः घटितत्वम् । समुदायघटकं मध्यशब्दार्थः । अभेदः सप्तम्यर्थः । तथाच त्रिविधकारणनिरूपितघटितत्ववत्समुदायघटकाभिन्नमसाधारणकारणमिति समग्रार्थः । यत्पदस्य तत्पदोपस्थाप्यतावच्छे-

दकरूपवानर्थः । तत्पदस्य बुद्धिविषयतावच्छेदकरूपवानथः । असाधारणकारणेतरावृत्तित्वमेवकारार्थः । करणपदस्य तत्पदवाच्यतावानर्थः । तदेकदेशे वाच्यत्वे एवकारार्थान्वयः । तथाच तत्पदोपस्थाप्यतावच्छेदकरूपवदभिन्नासाधारणकारणं बुद्धिविषयतावच्छेदकरूपवदभिन्नासाधारणकारणेतरावृत्तिकरणपदवाच्यतावदभिन्नमिति बोधः ।

**॥ तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

अत्र करणत्वस्य दण्डे ज्ञानकरणत्वस्यानुमानादौ प्रत्यक्षकरणत्वस्य प्रत्यक्षपदग्राह्येन्द्रियावयवे प्रत्यक्षज्ञानकारणत्वस्यादृष्टादौ यथाक्रममतिव्याप्तत्वात् **प्रत्यक्षज्ञानकरणम्**इत्युक्तम् । नचैवमुक्तेऽपि सन्निकर्षेऽतिव्याप्तिः शंक्या । व्यापारवत्त्वेनापि विशेषणात् । व्यापारत्वं च स्वजनकत्वस्वकारणजन्यत्वोभयसंबन्धेन कार्यविशिष्टत्वमिति । अत्र व्यापारवत्त्वं व्यापारतावच्छेदकसंबन्धेन बोध्यम् । तेन सन्निकर्षरूपव्यापारस्यापि तादात्म्यसंबन्धेन व्यापारवत्त्वेऽपि नातिव्याप्तितादवस्थ्यम् । तथाच व्यापारतावच्छेदकसंबन्धावच्छिन्नव्यापारनिष्ठाधेयतानिरूपिताधारतावत्त्वे सति प्रत्यक्षज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमिति फलितम । इदं च प्राचीनमतरीत्या । नवीनमते तु सन्निकर्षातिव्याप्तिवारकव्यापारवत्त्वं न निवेशनीयम् । न च तदनिवेशे तत्रातिव्याप्तिः । तस्यापि लक्ष्यत्वात् । अत्र नव्यमतमेव युक्तिसहमिति प्रतिभाति । तथाहि । प्रत्यक्षकरणं तावत्त्रिविधम् । क्वचिदिन्द्रियं क्वचित् सन्निकर्षः क्वचित्तु ज्ञानं चेति । नच सर्वेषु तेषु व्यापारवत्त्वासंभवान्न करणत्वमिति वाच्यम् । तस्याप्युपपादनात् । यथा घटत्वनिर्विकल्पके इन्द्रियं करणं

संयुक्तसमवायरूपः सन्निकर्षो व्यापारः । क्वचित् सन्निकर्षः करणं । यथा घटत्वसविकल्पके। तत्र संयुक्तसमवायरूपः सन्निकर्षः करणं निर्विकल्पकज्ञानं व्यापारः । क्वचित् ज्ञानं करणं । यथा हानादिबुद्धिं प्रति निर्विकल्पकज्ञानं करणं सविकल्पकज्ञानं व्यापारः । दुःखसाधनत्वज्ञानं हानम् । सुखसाधनत्वज्ञानमुपादानम् । उभयासाधनत्वज्ञानमुपेक्षा । तत्र कंटकत्वसविकल्पके तन्निर्विकल्पकाज्जाते दुःखसाधनत्वज्ञानरूपं हानं जायते । एवं मनोरमत्वनिर्विकल्पकात् तत्सविकल्पके जाते सुखसाधनत्वज्ञानरूपमुपादानं जायते । एवं तृणत्वनिर्विकल्पकात् तत्सविकल्पके जाते उभयासाधनत्वज्ञानमुपेक्षा जायत इति । तथाच व्यापारवत्त्वविशेषणे दत्तेऽप्यतिव्याप्तेरवारणात्तदघटितमेव लक्षणं परिष्कृत्य तेषु लक्ष्यत्वाङ्गीकरणमेव वरमिति नव्यमतमेव बहवः समाश्रितवन्तः ।

॥ प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः ॥

अत्र हेतुपदमसाधारणकारणपरम्। तेन साधारणकारणकालादिषु नातिव्याप्तिः । एवं व्यापारिभिन्नत्वेनापि विशेषणीयम् । तेनेन्द्रियादिषु नातिव्याप्तिः । यद्यप्युक्तरीत्या सन्निकर्षस्यापि व्यापारवत्त्वेन व्यापारिभिन्नत्वाभावादव्याप्तिः । तथापि व्यापारिपदार्थघटकव्यापारे ज्ञानेतरत्वं निवेशनीयम् । उक्तस्थले च निर्विकल्पकज्ञानस्य सन्निकर्षव्यापारत्वेन ज्ञानेतरव्यापारवदन्यत्वस्य सन्निकर्षेऽक्षतत्वेनाव्याप्त्यनवकाशात् । नच सविकल्पकज्ञानरूपव्यापारवति ज्ञानेतरव्यापारवदन्यस्मिन् हानोपादानादिप्रत्यक्षासाधारणकारणे निर्विकल्पकेऽतिव्याप्तिरिति वाच्यम् । ज्ञानेतरत्वविशेषणघटकीभूतज्ञाने निर्विकल्पकत्वस्य

विशेषितत्वात् । तथाच निर्विकल्पकेतरव्यापारवदन्यत्वे सति प्रत्यक्षासाधारणकारणत्वं सन्निकर्षस्य लक्षणम् । इन्द्रियेषु निर्विकल्पकेतरसन्निकर्षरूपव्यापारवत्सु नातिव्याप्तिः। निर्विकल्पके च निर्विकल्पकेतरसविकल्पकरूपव्यापारवति तदन्यत्वाभावान्नातिव्याप्तिः। सन्निकर्षे च निर्विकल्पकरूपस्यैव व्यापारस्य सत्त्वेन तदितरव्यापारवदन्यत्वसंभवान्नाव्याप्तिरिति विभावनीयम्। इन्द्रियार्थयोः सन्निकर्षः। षष्ठ्यर्थः प्रतियोगित्वं अनुयोगित्वं च । तथाचेन्द्रियप्रतियोगिकार्थानुयोगिकः सन्निकर्ष इति फलितोऽर्थः। नन्विदमसङ्गतम्। यत् पूर्वमिन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति सन्निकर्षघटितं प्रत्यक्षलक्षणमुक्त्वा इदानीं प्रत्यक्षघटितस्य सन्निकर्षलक्षणस्य कथनेऽन्योन्याश्रयापत्तेरिति चेन्मैवम् । चक्षुर्मात्रग्राह्यो गुणो रूपमिति चक्षुर्घटितत्वाद्रूपलक्षणस्य रूपग्राहकमिन्द्रियं चक्षुरिति रूपघटितत्वाच्च चक्षुर्लक्षणस्य तत्रापि लक्षणे परस्पराश्रयत्वदुष्टत्वापत्तेः । ननु शब्दस्य प्रतिशब्दमात्रं नेदमुत्तरम् । नहि तस्य दुष्टत्वमात्रेणैतददुष्टं भवतीति चेदनधिगताशयोऽसि । नहि वयं तद्दुष्टत्वमेवैतद्दुष्टत्वमिति प्रतिजानीमः। किंनाम तद्वारणप्रकारोऽत्राप्यनुसर्तव्य इति । रूपलक्षण एवान्योन्याश्रयपरिहारः कथमिति चेदित्थम् । चक्षुषो नेदं लक्षणं। किन्तु पार्थिवमिन्द्रियं तदिति । तद्वत्प्रकृतेपि प्रत्यक्षस्य नेन्द्रियार्थसन्निकर्षजन्यज्ञानत्वं लक्षणं किंनाम स्वरूपकीर्तनमेव तत् । अन्यथा ईश्वरज्ञानेऽव्याप्तिप्रसङ्गात् । प्रत्यक्षलक्षणन्तु ज्ञानाकरणकज्ञानत्वं । अत एव क्वचित्संग्रहपुस्तकेऽप्येतदर्थकं पाठान्तरं प्रदृश्यते । अथवा मुक्तावल्याद्युक्तदिशा जातिविशेष एव लक्षणम्। सर्वमुक्तं तद्व्यंजकं ।

यद्वा षडन्यतमत्वं सन्निकर्षस्य लक्षणमिति परस्पराघटितत्वान्नान्योन्याश्रयाद्यवकाशः। एवमन्येष्वपि लक्षणेषु प्रसक्तदोषनिवारणप्रकारः स्वयमूहनीय इति कृतं पल्लवितेन।

## इति तर्कसंग्रहार्थसंग्रहे प्रत्यक्षपरिच्छेदः समाप्तः॥

अथानुमानं निरूप्यते कार्यकारणभावापरपर्यायोपजीव्योपजीवकभावसंगत्या प्रत्यक्षानन्तरमनुमानं निरूपयितुमारभते।

**॥ अनुमितिकरणमनुमानम्। परामर्शजन्यं ज्ञानमनुमितिः॥**

अन्योन्याश्रयभिया अनुमानजन्यत्वाघटितं लक्षणमाह। **परामर्शजन्यमिति**। अनुमाननिरूपणावसरेऽनुमितिनिरूपणं कुत इति चेत्। घटितज्ञानं प्रति घटकज्ञानस्य कारणत्वात् प्रकृतोपपादकतयेति गृहाण। अपिच अनु पश्चात् मितिकरणत्वस्योपमानादिसाधारणतयाऽनुमितेर्विजातीयत्वप्रदर्शनाय लक्षणान्तरकरणम्। तत्रानुमितिलक्षणे परामर्शध्वंसेऽतिव्याप्तिवारणाय ज्ञानपदम्। अथ प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनः कारणतया तत्रातिव्याप्तिवारणाय परामर्शनिष्ठकारणतायां तादात्म्यसंबन्धानवच्छिन्नत्वं समवायसंबन्धावच्छिन्नत्वं वा तन्निरूपितजन्यतायां प्रतियोगितासंबन्धानवच्छिन्नत्वं समवायसंबन्धावच्छिन्नत्वं वा निवेश्यते। तथाचातएवातिव्याप्तेर्वारितत्वात् ज्ञानपदं व्यर्थम्। किंच कारणतायां कार्यतायां वा संबन्धविशेषानिवेशे परामर्शानुव्यवसायेऽतिव्याप्तिः। तस्य परामर्शरूपव्यवसायजन्यत्वात् ज्ञानत्वाच्च। तथाच ज्ञानपदोपादानेऽपि 'परामर्शप्रत्यक्षेऽतिव्याप्तिवारणाय संबन्धविशेषाव-

च्छिन्नत्वेऽवश्यं निवेशनीये किं ज्ञानपदोपादानेन । सबन्धनिवेशे न तत्रातिव्याप्तिः । विषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वात् । एतेन मूलोक्तं ज्ञानपदं परित्यज्य संबन्धविशेषं निवेशयता किमधिकमाचरितमित्यपास्तम् । ज्ञानपदोपादानेऽपि संबन्धनिवेशावश्यकताया उपपादितत्वात् । मैवम् । संस्कारेऽतिव्याप्तिवारणाय ज्ञानपदोपादानात् । तथाहि । समवायसंबन्धेन परामर्शात्मकप्रत्यक्षानन्तरं समवायेनात्मनि संस्कारः संजायत इति तं प्रति परामर्शस्य समवायेनैव कारणतया जन्यजनकतयोः संबन्धविशेषावच्छिन्नत्वं निवेश्य तत्रातिव्याप्तिवारणासंभवेन तत्रातिव्याप्तिवारणाय ज्ञानपदं न्यवीविशत् । नचैवमपि वन्हिव्याप्यधूमवत्पर्वतवानयं देश इति विशिष्टवैशिष्ट्यावगाहिबुद्धावतिव्याप्तिः । तत्र विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वनियमेन परामर्शजन्यत्वस्य च सत्त्वात् । एवं दीपिकोक्तपरामर्शानन्तरप्रत्यक्षेऽप्यतिव्याप्तिर्ज्ञानपदोपादानेऽपि न निवारिता भवतीति वाच्यम् । पक्षताजन्यत्वेनापि विशेषणात् । पक्षताजन्यत्वस्यानुमितावेव सत्त्वेनान्यत्रातिव्याप्तेरप्रसक्तेः । नचैवं ध्वंसे संस्कारे वा तत एवातिव्याप्तेर्वारितत्वात् ज्ञानपदं पुनरजागलस्तनायितमिति वाच्यम् । इच्छाविशेषेऽतिव्याप्तिवारणाय तन्निवेशात् । तथाहि । परामर्शः पक्षता च मम भवतु इत्याकारकेच्छां प्रति विषयविधया परामर्शपक्षत्वयोः द्वयोरपि कारणत्वे परामर्शजन्यत्वे सति पक्षताजन्यत्वस्य तत्र सत्त्वेन ज्ञानपदस्य सार्थक्यात् । न च जन्यतायां जनकतायां वा समवायसंबन्धावच्छिन्नत्वादिनिवेशादप्युक्तातिव्याप्तिवारणसंभवात् ज्ञानपदं व्य-

र्थमेवेति वाच्यम् । संबन्धविशेषमनिवेश्य यथाश्रुतमूलानुसारेण ज्ञानपदसार्थक्यकरणात् । अन्यथा पक्षतायाः संबन्धविशेषेणानुमितिं प्रत्येव कारणतया परामर्शजन्यत्वस्यापि वैयर्थ्यापातात् । न चातिलाघवादिष्टमेव तदिति वाच्यम् । लक्षणस्य लक्षणान्तरं न दोषायेति लक्षणान्तरपरतया मूलस्य सार्थक्यसंभवे तद्वैयर्थ्यकथनस्यानुचितत्वात् । संशयानन्तरप्रत्यक्षं प्रति परामर्शस्य विशेषदर्शनत्वेन कारणतया परामर्शत्वावच्छिन्नजनकतानिरूपितजन्यताया उक्तेषु सर्वेष्वपि स्थलेष्वभावादेव सर्वातिव्याप्तिवारणसंभवे पक्षताजन्यत्वस्यापि वैयर्थ्यापत्तेः । अतो दीपिकाकारोऽपि पक्षताजन्यत्वं विशेषणमुपाददानः रीत्यन्तरेण मूलमपरिष्कुर्वन् विशेषणान्तरप्रक्षेपापेक्षया मौलपदपरित्यागदोषं गरीयांसं प्रतिजानातीवेति सर्वमकलंकम् ।

॥ वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः ॥

अत्र इतिपदस्याऽऽकारोऽर्थः । स च वन्हिनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यितारूपः । तस्य ज्ञानेऽन्वयः । तथाच तादृशाकारवज्ज्ञानं परामर्शपदवाच्यमित्यर्थः । परामर्शस्तु द्विविधः वन्हिव्याप्यधूमवानयं पर्वत इति पक्षविशेष्यकः । पर्वते वन्हिव्याप्यधूम इति पक्षप्रकारकश्चेति । तत्र पक्षविशेष्यकपरामर्शात् पक्षविशेष्यिका पर्वतो वन्हिमानित्याकारिकाऽनुमितिः । पक्षप्रकारकात्तु परामर्शात् । पक्षप्रकारिका पर्वते वन्हिरित्याकारिकाऽनुमितिरिति प्राचः । यद्यप्येतैकैकविधपरामर्शात्त्वेऽपि अन्यान्यविधानुमितेरुत्पत्त्या परस्परं व्यभिचारावन्वयतो व्यतिरेक-

तश्च प्रसज्येते। तथापि स्वाव्यवहितोत्तरत्वसंबन्धेन पक्षविशेष्यकपरामर्श-विशिष्टानुमितिं प्रति केवलपक्षविशेष्यकानुमितिं प्रति वा पक्षविशेष्यकपरा-मर्शः कारणम्। एवमुक्तसंबन्धेन पक्षप्रकारकपरामर्शविशिष्टानुमितिं प्रति पक्षप्रकारकानुमितिं प्रति वा पक्षप्रकारकपरामर्शः कारणमिति कार्यकारण-भावमङ्गीकृत्य व्यभिचारः परिहरणीयः। नव्यास्तु अनुभवानुरोधेनोभय-विधादपि परामर्शात्पक्षविशेष्यिकैवानुमितिरिति प्राहुः। यद्यपि तन्मते परामर्शसामान्यस्य न तावत्साध्यनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपित-धूमत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छि-न्नविशेष्यताशालिनिश्चयत्वं लक्षणम्। पक्षप्रकारकपरामर्शेऽव्याप्तेः। नापि साध्यनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशे-ष्यत्वावच्छिन्नविशेष्यतानिरूपितपक्षतावच्छेदकावच्छिन्नप्रकारताशालि-निश्चयत्वं तत्। पक्षविशेष्यकपरामर्शाव्याप्तेः। तथापि प्रथमोक्तमेव लक्ष-णतयाऽङ्गीक्रियते। न चोक्ताव्याप्तिदोषः। तत्राप्यस्य लक्षणस्य तुल्यवित्ति-वेद्यत्वन्यायेन सत्त्वेनाव्याप्तेरभावात्। तथाहि। प्रत्यक्षे विशेषणविशेष्य-भासकसन्निकर्षादिघटितसामग्रीणां साम्यात्परस्परं पदार्थद्वयमपि विशेष्यं विशेषणं च भवतीति। यथा नीलो घट इति प्रत्यक्षं नैल्यप्रकारकं नैल्यविशेष्यकं च भवतीति तन्नियमाङ्गीकर्तृमतसिद्धम्। विशेष्यविशेष-णभासकसामग्रीतौल्यात्। तद्वत्प्रकृते वन्हिव्याप्यधूमवान् पर्वत इति प्रत्यक्षं वन्हिव्याप्यधूमप्रकारकं धूमविशेष्यकं वा भवति। एवमन्योऽपि परामर्श उभयविधो भवतीति नाव्याप्त्यवकाशः। एवं तर्हि वन्हि-निरूपितव्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वावच्छिन्न-

विशेष्यतानिरूपितपक्षतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वमपि लक्षणं संभवतीति चेत् किं नश्छिन्नम् । तदपि भवतु लक्षणान्तरं तुल्यवित्तिवेद्यतामतरीत्या । तुल्यवित्तिवेद्यत्वशब्दार्थस्तु तुल्या समाना वित्तिर्ज्ञानं तन्निरूपिता वेद्यता विषयता । तथाच ज्ञाननिरूपितं विषयत्वं विशेषणविशेष्ययोः समानमुक्तरीत्येत्यर्थः । प्रकारताविशिष्टविशेष्यत्वं तुल्यवित्तिवेद्यत्वमिति फलितम् । वैशिष्ट्यं च स्वनिरूपितत्वस्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छिन्नत्वोभयसंबन्धेन । तन्मते विशेष्ये विशेषणे च प्रकारत्वविशेष्यत्वयोर्द्वयोर्विषयतयोस्सत्त्वेन तयोश्चैकनिष्ठत्वेन परस्परमवच्छेद्यावच्छेदकभावाल्लक्षणसमन्वयः । अथवा विशेष्यताविशिष्टप्रकारत्वं तत् । वैशिष्ट्यं च स्वनिरूपितत्वस्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वोभयसंबन्धेन । यद्वा विषयताविशिष्टविषयत्वं तत् । वैशिष्ट्यं च स्वनिरूपितत्वस्वविशिष्टविषयत्वावच्छिन्नत्वोभयसंबन्धेन । विषयतायां स्ववैशिष्ट्यं च स्वावच्छिन्नविषयतानिरूपितत्वस्वसाजात्योभयसंबन्धेन । साजात्यं च स्ववृत्तिप्रकारतात्वविशेष्यतात्वान्यतररूपेण । लक्षणसमन्वयः पूर्ववदित्यलं प्रसक्तानुप्रसक्त्या । ननु तुल्यवित्तिवेद्यताया नवीनैरनुपगमात्तन्मतरीत्या लक्षणपरिष्करणवेलायां प्राचीनमतसिद्धन्यायमवलंब्य लक्षणानुगतिकरणमरण्यरोदनप्रायम् । अपिच "भक्षितेऽपि लशुने"इत्यादिन्यायात्तन्मतादरणेऽपि शाब्दपरामर्शेऽव्याप्तेरपरिहारश्च । तत्र विशेष्यविशेषणभासकसामग्र्या नियतत्वेन प्रत्यक्षवद्विशेष्यत्वप्रकारत्वयोः कामचारित्वाभावात् । एवं नियतसामग्रीकानुमानिकपरामर्शेऽपि द्विविधे विषयतयोः कामचारि-

त्वाभावात्परस्परमव्याप्तिर्बोध्येति चेन् भवतु तावदेवम् । तर्हि साध्यनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वं परामर्शसामान्यलक्षणमिति । अस्यायमनुगमः । किंचिद्धर्मविशिष्टविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वमिति । किंचिद्धर्मवैशिष्ट्यं च विषयतायां स्वावच्छिन्नत्वस्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्यापकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नसामानाधिकरण्यनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वोभयसंबन्धेन । अत्र धर्मपदेन हेतुतावच्छेदकीभूतो धर्मो ग्राह्यः । लक्षणसमन्वयप्रकारः स्वयमूहनीयः ।

**॥ यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः ॥**

अस्यानुपूर्व्यवच्छिन्नवाक्यमर्थः । तस्य प्रतिपाद्यतासंबन्धेन साहचर्यनियमेऽन्वयः । व्याप्तिर्नामानुमितिजनकतावच्छेदकपक्षनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारताश्रयः । तथाचोक्तरूपा व्याप्तिः उक्तानुपूर्व्यवच्छिन्नवाक्यप्रतिपाद्यतावत्साहचर्यनियमाभिन्नेति वाक्यार्थः । साहचर्यनियमशब्दार्थस्तु सह चरत इति सहचरौ सहशब्दार्थः परस्पराधिकरणं चरधात्वर्थ आधेयता । यद्यप्ययं धातुः गतिभक्षणयोर्विद्यते । तथापि "क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव" इति प्रमाणबलादाधेयतार्थकत्वमपि प्रकृते नानुपपन्नम् । आख्यातार्थ आश्रयत्वं । तथाच परस्पराधिकरणनिरूपिताधेयतानिरूपिताश्रयतावन्ताविति विग्रहार्थः। आख्यातार्थस्थाने आश्रयतावतो

ड्प्रत्ययार्थत्वमभ्युपेत्य सहचराविति शब्दादप्ययमेवार्थो बोध्यः । तयोर्भावः साहचर्यं । परस्पराधिकरणनिरूपिताधेयतावत्त्वं सामानाधिकरण्यपर्यवसितम् । नियमो नामाभाववदवृत्तित्वम् । साहचर्यस्येति षष्ठ्यर्थः सामानाधिकरण्यम् । तस्य नियमेऽन्वयः । अभावे च योग्यतया साध्यप्रतियोगिकत्वं लंभनीयम् । तथाच परस्पराधिकरणनिरूपितवृत्तित्वसमानाधिकरणं साध्याभाववदवृत्तित्वं व्याप्तिरिति फलितं । अथवा नियमो नाम व्यापकत्वम् । साहचर्यस्येति षष्ठ्यर्थो निरूपकवृत्तित्वम् । तथाच साहचर्यनिरूपकवृत्तिव्यापकत्वं व्याप्तिरिति निष्पन्नं । यथा साध्यनिरूपितं सामानाधिकरण्यं चेत् तन्निरूपकं साध्यं तद्वृत्ति च व्यापकत्वमिति सिद्धान्तपूर्वपक्षीयव्याप्त्योः साहचर्यनियमशब्दप्रतिपाद्यता । परस्परत्वं नाम विधेयविशिष्टोद्देश्यतावच्छेदकवत्त्वम् । वैशिष्ट्यं च स्वसमानाधिकरणत्वस्वसमानाधिकरणाभावप्रतियोगित्वोभयसंबन्धेन । यथा चैत्रमैत्रयोः परस्परं मैत्रीत्यादौ मैत्रीरूपविधेयविशिष्टं चैत्रत्वादिरूपमुद्देश्यतावच्छेदकं भवति । तत्र चैत्रत्वं विधेयीभूतमैत्र्यधिकरणचैत्रवृत्ति । एवं मैत्र्यधिकरणमैत्रवृत्त्यभावप्रतियोगि चेत्युभयसंबन्धेन विधेयविशिष्टं तद्भवति । एवं मैत्रत्वेऽपि विधेयविशिष्टत्वमुपपादनीयम् । एवमन्यत्रापि परस्परत्वमुपपादनीयम् ।

## ॥ लिंगं त्रिविधम् ॥

अनुमानत्रैविध्यं तन्निरूपणावसरेऽनुक्त्वा लिंगत्रैविध्यकथनन्तु तत्त्रैविध्यस्यैतत्त्रैविध्याधीनत्वात्प्रकृतानुकूलतयेत्यवसेयम् ।

## ॥ अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि ॥

अन्वयः साध्यं व्यतिरेको नामाभावः सहचारग्रहग्राह्यत्वं तृतीयार्थः । तथाच साध्यसहचारग्रहग्राह्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमत्त्वं अन्वयव्यतिरेकिलिंगस्य लक्षणम् ।

॥ अन्वयमात्रव्याप्तिक केवलान्वयि ॥

अत्र साध्येतरसहचारग्रहग्राह्यव्याप्तिशून्यत्वे सति साध्यसहचारग्रहग्राह्यव्याप्तिमत्त्वं लक्षणमिति फलितम् । नन्विदमसंभवि । घटोऽभिधेयः प्रमेयत्वादित्युदाहरणं ग्रन्थकृता प्रादर्शि । तत्र साध्यमभिधेयत्वं तदितरत् ज्ञेयत्वं तत्सहचारग्रहग्राह्यव्याप्तेः प्रमेयत्वे सत्त्वादिति । नचेतरपदेनाभावो विवक्षितः । तत्सहचारग्रहग्राह्यव्याप्तिशून्यत्वमेव मात्रपदेन विवक्षितमिति नासंभव इति वाच्यम् । प्रमेयत्वे कपिसंयोगाभावस्य संयोगेन गुणाद्यभावस्य वा सहचारग्रहग्राह्यव्याप्तिमत्त्वस्य सत्त्वेन तथाविवक्षणेऽप्यसंभवापरिहारात् । नचेतरपदेन साध्याभाव एव विवक्षित इत्युदासीनाभावनिरूपितव्याप्तिसत्त्वेऽपि साध्याभावनिरूपित व्याप्तेरभावान्नासंभव इति वाच्यम् । साध्याभावः प्रमितो न वा । आद्ये तद्वति वर्तमानो हेतुः साध्यं व्यभिचरेत् । अवर्तमानस्त्वन्वयव्यतिरेक्येव । द्वितीये साध्याभावाप्रसिध्या तन्निरूपितव्याप्तिशून्यत्वमप्यप्रसिद्धमिति पुनरसंभव एवेति चेन्मैवम् । साध्यनिरूपितव्याप्तिमत् तदभावनिरूपितव्याप्तिमच्च यद्यत्तत्तदन्यत्वस्य विवक्षितत्वेन तादृशोभयव्याप्तिमत्प्रसिद्धधूमाद्यन्यत्वमादाय लक्षणसत्त्वोपपादनेनासंभवाभावात् । नचासर्वज्ञदुर्ज्ञेयतेति वाच्यम् । स्वनिरूपितव्याप्तिमत्त्वस्वाभावनिरूपितव्याप्तिमत्त्वैतदुभयसंबन्धेन किंचित्पदार्थविशिष्टान्यत्वस्य तदर्थत्वेन वि-

वक्षणेनादोषात् । अथवा साध्याभावनिरूपितव्याप्तिशून्यत्वे सति साध्यनिरूपितव्याप्तिमत्त्वमेव तल्लक्षणम् । नचोक्ताप्रसिद्धिदोष । साध्याभावनिरूपितव्याप्तिशून्यत्वं नाम स्वाभावनिरूपितव्याप्तिमत्त्वसंबन्धावच्छिन्नसाध्यनिष्ठप्रतियोगितानिरूपकाभाववत्त्वमित्यर्थविवक्षणेन दोषाभावात् । अन्यत्र धूमादौ प्रसिद्धस्यास्य संबन्धस्य व्यधिकरणसंबन्धत्वादिति । अत्र प्रथमकल्पे स्वाभावनिरूपितव्याप्तिमत्त्वं नाम स्वाभावव्यापकीभूताभावप्रतियोगित्वरूपं विवक्षितम्.। अन्यथा प्रमेयत्वादावसंभवापत्तेः । तथाहि । प्रमेयत्वे कपिसंयोगाभावनिरूपितव्याप्तेः कपिसंयोगाभावः संयोगेन नास्तीति प्रतीतिसाक्षिककपिसंयोगाभावाभावनिरूपितव्याप्तेश्च सत्त्वात् यत्र यत्र प्रमेयत्वं तत्र तत्र कपिसंयोगाभावः । एवं यत्र यत्र प्रमेयत्वं तत्र तत्र संयोगेन कपिसंयोगाभावो नास्तीति प्रतीतिसाक्षिकाभावश्चेति प्रतीतिबलात्सत्त्वेनोक्तोभयसंबन्धेन कपिसंयोगाभावरूपकिंचित्पदार्थविशिष्टत्वेन तदन्यत्वायोगादिति । सांप्रतिकविवक्षायान्तु कपिसंयोगाभावाभावनिरूपितव्याप्तेः प्रमेयत्वव्यापकतादृशाभावसामानाधिकरण्यरूपायाः सत्त्वेऽप्यत्यन्ताभावाप्रतियोगिनि प्रमेयत्वे तादृशकपिसंयोगाभावाभावव्यापकीभूताभावप्रतियोगित्वरूपायाः व्याप्तेरभावेनासंभवानवकाशात् । तत्र व्यापकीभूताभावपदेनान्याभावप्रतिग्रहे तत्प्रतियोगित्वस्य प्रमेयत्वेऽभावेनाप्रसिद्ध्या च प्रमेयत्वाभावपरिग्रहायोगेनोक्तोभयसंबन्धेन किंचित्पदार्थविशिष्टान्यत्वस्य तत्राव्याहतत्वादिति । एवं व्यापकीभूताभावप्रतियोगिता हेतुतावच्छेदकसंबन्धावच्छिन्नत्वेन निवेशनीया । अन्यथा संयोगेन प्रमेयत्वं नास्तीति प्रतीतिसाक्षिकं

तादृशाभावव्यापकीभूताभावमादाय पुनरसंभवापत्ते. । एवं हेतुतावच्छेदकावच्छिन्नत्वेनापि प्रतियोगिता निवेश्या । अन्यथा व्यापकाभावपदेन स्वरूपेण प्रमेयत्वगगनोभयं नास्तीति प्रतीतिसाक्षिकाभावमादायोक्तदोषतादवस्थ्यात् । नच हेतुतावच्छेदकपदेन प्रकृतहेतुतावच्छेदकविवक्षायां प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धिः । तदविवक्षणे प्रमेयत्वगगनोभयत्वस्यापि क्वचिद्धेतुतावच्छेदकत्वात् पुनरुक्तासंभवपिशाचिका समास्कन्दतीति वाच्यम् । हेतुतावच्छेदकविशिष्टान्यहेतुतावच्छेदकवत्त्वमन्वयमात्रव्याप्तिकत्वम् । हेतुतावच्छेदके तद्वैशिष्ट्यं च स्वावच्छिन्नव्यापकसाध्यसामानाधिकरण्यावच्छेदकत्वस्वावच्छिन्नव्यापकसाध्याभावव्यापकाभावप्रतियोगितावच्छेदकत्वैतदुभयसंबन्धेनेति । तथाच तदुभयसंबन्धेन धूमत्वादिरूपहेतुतावच्छेदकवैशिष्ट्यस्य धूमत्वादौ प्रसिद्धस्याप्रसिध्या प्रमेयत्वत्वादावसंभवेन तदन्यत्वसत्त्वाल्लक्षणसमन्वयः । अधिकमन्यत्रानुसन्धेयम् । नचैवमुभयव्याप्तिशून्योदासीनपदार्थेऽतिव्याप्तिरिति वाच्यम् । किमेवमेवेयं प्रतिज्ञा वा तादृशं स्थलं प्रदर्श्यते वा । नाद्यः । अप्रामाणिकतयाऽनादरणीयत्वात् । अन्यथा सर्वत्राप्येवं प्रतिज्ञाकरणसंभवेन लक्षणमात्रस्य दुष्टत्वापत्तेः । द्वितीये न खलु तादृशं वस्तु विद्यते । यदुभयव्याप्तिशून्यं विना केवलान्वयीति । यथा घटादीनामपि घटत्वतदभावादिनिरूपितायाः उक्तरूपाया व्याप्तेः कपालतदभावादिनिरूपितायाश्च तादात्म्यसमवायादिसंबन्धभेदेन सत्त्वेन तादृशवस्तुनः शशशृंगायितत्वात् । यावांश्च तादृशः कपिसंयोगाभावादिः केवलान्वयी स सर्वोऽपि लक्ष्य एवेति । नचैवमप्यु-

भयव्याप्तिशून्ये केवलव्यतिरेकिण्यतिव्याप्तिरिति वाच्यम् । तत्रोभयव्याप्तिशून्यत्वस्यैवाभावात् । तथाहि । "पृथिवी इतरभिन्ना गन्धवत्त्वादि"ति वक्ष्यमाणगन्धरूपकेवलव्यतिरेकिणि गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तेः सत्त्वात् । यतो हि नायं हेतुर्व्यभिचारी । नवा बाधितः येनान्वयतो व्याप्तिर्भज्येत । व्यतिरेकव्याप्तिश्च ग्रन्थकृतैव प्रदर्शयिष्यत इति नास्माभिः प्रयतनीयम । तथाच व्याप्तिद्वयसत्त्वेनातिव्याप्तेरनवतारात् । नचैवमुत्तरत्र वक्ष्यमाणकेवलव्यतिरेकिलक्षणस्यासंभवः । तत्र व्यतिरेकमात्रव्याप्तिकत्वरूपलक्षणस्याभिधास्यमानत्वेन तस्यापि व्याप्तिद्वयसत्त्वे तदयोगादिति वाच्यम् । मा त्वरस्व । यथा नासंभवः तथाऽनुपदमेव परिष्क्रियमाणत्वादित्यलम् ।

॥ व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि ॥

साध्यनिरूपितव्याप्तिप्रकारकनिश्चयविशेष्यत्वाभाववत्त्वे सति साध्याभावनिरूपितोक्तव्याप्तिमत्त्वं लक्षणम् । अतो नोक्तासंभवः । व्याप्तिसत्त्वेऽपि तद्ग्राहकस्थलाभावेन तत्प्रकारकनिश्चयाभावेन तद्विशेष्यत्वाभावात् । अत्र तादृशनिश्चयनिरूपितविशेष्यतायाः प्रमित्यप्रमितिभ्यां निषेधासंभवदोषवारणाय स्वप्रकारकनिश्चयविशेष्यत्वरूपव्यधिकरणसंबन्धेन तादृशव्याप्त्यभाववत्त्वे तल्लक्षणपर्यवसानं बोध्यम् । नचैवमपि साध्यनिरूपितव्याप्तिरूपप्रतियोगिप्रमित्यप्रमितिभ्यामेवोक्तदोषो दुरपन्हव इति वाच्यं । स्वनिरूपितव्याप्तिप्रकारकनिश्चयविशेष्यत्वसंबन्धेन साध्याभावस्यैव लक्षणतात्पर्यविषयतया दोषाभावात् । साध्याप्रमितिकृतो दोषस्तु ग्रन्थकृतैव दीपिकादौ वारित इति तत्रैवानुसन्धेयम् ।

**॥ सन्दिग्धसाध्यवान् पक्षः ॥**

साध्यप्रकारकसन्देहविशेष्यत्वं लक्षणम् । नतु यथाश्रुतं सन्देह-विषयसाध्यवत्त्वम् । ह्रदो वन्हिमानित्यादौ ह्रदे साध्याभावेनाव्याप्तिप्रसङ्गात् । नचाक्षरालभ्यत्वदोषः । सन्दिग्धः साध्यो यत्रेति विग्रहात् यद्विशेष्यकसन्देहप्रकारीभूतं साध्यमिति लाभे समासात् साध्यप्रकारक-सन्देहविशेष्यत्वस्य शब्दत एव लाभात् । नच बहुव्रीहिकरणे मतुपो वैयर्थ्यम् X । यथाश्रुतार्थपरित्यागकाले यथाश्रुतानुपूर्वीघटकमतुपोऽपि त्याज्यत्वात् । यद्यप्यनुमित्युद्देश्यत्वरूपलघुलक्षणं संभवतीति घनगर्जित-मेघानुमानादिस्थलीयाव्याप्तिवारणाय प्रवृत्तसिद्धान्तीयसिषाधयिषेत्यादि-गुरुतरलक्षणारंभो विफलः । तथाऽप्युक्तरीत्याऽनुमितिलक्षणस्य पक्षता-घटितत्वेन पक्षतालक्षणेऽप्यनुमितेर्घटकतायामन्योन्याश्रयतेति ग्रन्थकृल्लघु-लक्षणं पर्यत्याक्षीत् ।

सद्धेतुप्रसङ्गात्तत्त्वनिर्णयविजयादिप्रयोजकत्वाच्च सद्धेतुनिरूपणा-नन्तरं हेत्वाभासान्निरूपयति ।

**॥ सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पंच हेत्वाभासाः ॥**

तत्र प्रसङ्गो नाम स्मृतिविषयतावच्छेदको द्वेषविषयतानवच्छेदको धर्मः । स च प्रकृते स्वगतव्याप्तिपक्षधर्मताविरहरूपः । स्वपदं च सद्धेतु परम् । व्याप्तिपक्षधर्मतावद्धेतुनिरूपणे "एकसंबन्धिज्ञानमि"ति रीत्या तद्विरोधिदुष्टहेतोः स्मरणात् । विजयो नाम पराहंकारखण्डनम् । अहंकारो नाम स्वोत्कृष्टत्वप्रकारकज्ञानम् । तस्य खण्डनं नाम मध्यस्थस्य तादृश-ज्ञानविशेष्यकाप्रामाण्यप्रकारकज्ञानसंपादनम् । तथाच हेत्वाभासानां

स्वज्ञानद्वारा परोक्तहेतौ दोषोद्भावनेन परपराजयहेतुत्वम् । एवं स्वज्ञान-द्वारा स्वोक्तहेतौ तदभावोद्भावनेन समीचीनत्वज्ञानहेतुत्वाच्च विजयप्रयोजकत्वम् । यद्रूपावच्छिन्नविषयताव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वं दोषसामान्यस्य लक्षणम् । यद्रूपपदं दोषतावच्छेदक-परम् । तथाच बाधत्वव्यभिचारत्वादिकं यद्रूपपदेन धर्तव्यम् । एवंच वन्ह्यभाववद्ध्रदत्वरूपयद्रूपावच्छिन्नविषयता यत्र यत्रेत्युक्तौ वन्ह्यभाववान् ह्रद इति ज्ञाने तत्र ह्रदो वन्हिमानिति प्रकृतानुमितिप्रतिबन्धकता विद्यत इति लक्षणसमन्वयः । एवं धूमाभाववद्वृत्तिवन्हित्वावच्छिन्नवि-षयता यत्र यत्रेत्युक्तौ धूमाभाववद्वृत्तिर्वन्हिरित्याकारकज्ञाने तत्रापि प्रकृतानुमितिप्रतिबन्धकता विद्यत इति । एवमन्यत्रापि लक्षणसमन्वयप्रकारः स्वयमूह्यः । नच व्यभिचारादीनामनुमित्यप्रतिबन्धकत्वादव्याप्तिरिति वाच्यम् । प्रकृतानुमितिपदेन पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकसमूहालंबनानुमितेर्विवक्षिततया तत्र प्रकृतपरामर्शस्यापि प्रविष्टतया तादृशानुमितिं प्रति व्यभिचारज्ञानस्यापि प्रतिबन्धकतया न काप्यव्याप्तिः । लक्षणस्य यत्तदादिघटितत्वेनाननुगतत्वशङ्कायां प्रतिबन्धकतावृत्तिरूपवत्त्वरूपमनुगतलक्षणं करणीयम् । रूपे वृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन । तत्र स्वाधिकरणत्वं स्वावच्छिन्नविषयताशालिनिश्चयत्वसंबन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूपसंबन्धेन । रूपपदं दोषतावच्छेदकपरम् । रूपपदेन वन्ह्यभाववध्द्रदत्वादिकं धर्तव्यम् । तथा च स्वावच्छिन्नविषयताशालिनिश्चयत्वसंबन्धेन तदधिकरणं

वन्ह्यभाववान् ह्रद इति निश्चयः । तत्र स्वरूपेण प्रतिबन्धकता विद्यत इति वन्ह्यभाववद्ध्रदत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वं न प्रतिबन्धकतायामिति तेन संबन्धेन वन्ह्यभाववद्ध्रदत्ववान्नेति प्रतीतिसाक्षिकस्य स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य प्रतिबन्धकतायां सत्त्वेन तद्वृत्तित्वं रूपस्य नानुपपन्नमिति लक्षणसमन्वयः । एवमन्यत्रापि । अत्र लक्षणे ह्रदो वन्ह्यभाववान्न वा इति संशये वन्ह्यभाववान् ह्रद इति ज्ञानमप्रमेत्यप्रामाण्यज्ञानास्कन्दिते वन्हिमान् ह्रदो वन्ह्यभाववानिति स्वविरुद्धधर्मधर्मितावच्छेदककाहार्ये च वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयतायाः सत्त्वेऽपि प्रतिबन्धकताया अभावेन प्रतिबन्धकतायां व्यापकत्वभङ्गादसंभववारणाय यद्रूपावच्छिन्नविषयतापदेनानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयता धर्तव्या । तथाचोक्तज्ञानेष्वेतादृशविशिष्टविषयताया अभावेन न व्यापकत्वक्षतिरिति । अनुगमे च स्वाधिकरणत्वं स्वावच्छिन्नविषयताशालिनिश्चयत्वसंबन्धेनेत्युक्तम् । तत्र स्वावच्छिन्नविषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वसंबन्धेनेति विवक्षणीयम् । लक्षणसमन्वयप्रकारस्तु यद्रूपपदेनवन्ह्यभाववद्ध्रदत्वस्वीकारे तदवच्छिन्नविषयतापदेन वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयतामादायास्या विषयताया अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चये सत्त्वेन तत्र प्रतिबन्धकताऽपि विद्यत इति वन्ह्यभाववद्ध्रदत्वरूपतद्रूपावच्छिन्नत्वं वन्ह्यभाववद्ध्रदरूपबाधे विद्यत इति लक्षणसमन्वयः । एवं व्यभिचारे यद्रूपं धूमाभाववद्वृत्तिवन्हित्वं तदवच्छिन्नविषयता धूमाभाववद्वृत्तिवन्हित्वावच्छिन्नविषयता सा प्रति-

वन्धकता च धूमाभाववद्वृत्तिः वन्हिरित्युक्तविशेषणाक्रान्ते निश्चय इति तद्व्यापिका प्रतिबन्धकता भवतीति धूमाभाववद्वृत्तिवन्हित्वरूपतद्रूपाव-च्छिन्नत्वं धूमाभाववद्वृत्तिवन्हाविति लक्षणसमन्वयः । हृदो वन्हिमान् धूमादित्यादौ धूमाभाववद्धृदरूपस्वरूपासिद्धौ यद्रूपं धूमाभाववद्धृदत्वं तदवच्छिन्नविषयता धूमाभाववद्धृदत्वावच्छिन्नविषयता सा प्रतिबन्धकता च धूमाभाववान् हृद इत्युक्तरूपे निश्चय इति तादृशविषयताव्यापिका प्रतिबन्धकता भवतीति धूमाभाववध्दृदत्वरूपतद्रूपावच्छिन्नत्वं धूमाभाव-वध्दृद इति । हृदो वन्हिमान् जलादित्यादौ वन्ह्यसमानाधिकरणजल-रूपविरोधे तद्रूपं वन्ह्यसमानाधिकरणजलत्वं तदवच्छिन्नविषयता वन्ह्यसमानाधिकरणजलत्वावच्छिन्नविषयता सा प्रतिबन्धकता च वन्ह्य-समानाधिकरणं जलमिति निश्चय इति तादृशविषयताव्यापकत्वात् प्रतिबन्धकताया इति वन्ह्यसमानाधिकरणजलत्वरूपतद्रूपावच्छिन्नत्वं विरोध इति । एवमत्रैव वन्ह्यभावव्याप्यजलवध्दृदरूपसत्प्रतिपक्षे यद्रूपावच्छिन्नविषयता नाम वन्ह्यभावव्याप्यजलवदृदत्वावावच्छिन्नविषय-ता सा प्रतिबन्धकता च वन्ह्यभाववव्याप्यजलवान् हृद इत्युक्तरूपे निश्चय इति तद्रूपावच्छिन्नत्वं तत्र । एवं साधनाप्रसिध्यादिष्वप्यूहनीयम् । अत्र सुबोधाय प्रतिबध्यप्रतिबन्धकभावो विविच्यते । अत्र हृदो वन्हि-मानित्यादौ हृदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नव-न्हित्वावच्छिन्नप्रकारताशाल्यनाहार्यबुद्धित्वावच्छिन्ना प्रतिबध्यता तन्निरूपिता च हृदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्न-वन्हित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्न-

प्रकारताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वावच्छिन्नप्रतिबन्धकतेति बाधे प्रतिबध्यप्रतिबन्धकभावः । सत्प्रतिपक्षे प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नवन्हित्वावच्छिन्नप्रकारताशाल्य नाहार्यबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिताह्रदत्वावच्छिन्नविशेष्यतानिरूपित संयोगसंबन्धावच्छिन्नवन्हित्वावच्छिन्नप्रतियोगिताकाभावव्याप्यजलत्वावच्छिन्नप्रकारताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वावच्छिन्नप्रतिबन्धकतेति । असिद्धौ स च ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नप्रकारताशाल्यनाहार्यबुद्धित्वावच्छिन्नप्रतिघध्यतानिरूपिता ह्रदत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारताशालिनिरूक्तनिश्चयत्वावच्छिन्ना प्रतिबन्धकतेति । एवं कांचनमयह्रदः कांचनमयवन्हिमान् कांचनमयधूमादित्यादौ कांचनमयत्वाभाववध्दूमादिरूपसाधनाप्रसिद्धौ स च धूमत्वावच्छिन्नविशेष्यतानिरूपित कांचनमयत्वत्वावच्छिन्नप्रकारताशाल्यनाहार्यबुद्धित्वावतिछन्नप्रतिबध्यतानिरूपिता धूमत्वावच्छिन्नविशेष्यतानिरूपित कांचनमयत्वाभावत्वावच्छिन्नप्रकारताशाल्युक्तनिश्चयत्वावच्छिन्ना प्रतिबन्धकतेति । एवं साध्याप्रसिध्यादावप्यूहनीयाः । व्यभिचारे स च । वन्हित्वावच्छिन्नविशेष्यतानिरूपित धूमाभाववद्वृत्तित्वाभावत्वाच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारताशाल्यनाहार्यबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता वन्हित्वावच्छिन्नविशेष्यतानिरूपित धूमाभाववद्वृत्तित्वत्वावच्छिन्नप्रकारताशाल्युक्तनिश्चयत्वात्वच्छिन्नप्रतिबन्धकतेति ।

वन्हिमान् जलादित्यादिस्थलीयवन्ह्यसमानाधिकरणजलरूपविरोधस्य च जलत्वावच्छिन्नविशेष्यतानिरूपितवन्हिसामानाधिकरण्यत्वावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता जलत्वावच्छिन्नविशेष्यतानिरूपितवन्हिसामानाधिकरण्याभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतेति। एवमन्यविधव्यभिचारविरोधादिष्वपि प्रतिबध्यप्रतिबन्धकभावो द्रष्टव्यः। अथ दोषाणां स्वरूपं निरूप्यते। तत्र साध्याभाववत्पक्षः साध्यवदन्यपक्षः पक्षवृत्तिः साध्याभावः पक्षवृत्तिसाध्यवदन्यत्वं वा पक्षावृत्तिसाध्यं वा पक्षनिष्ठाभावप्रतियोगि साध्यं वा बाधः। साध्याभावव्याप्यवान् पक्षः पक्षवृत्तिसाध्याभावव्याप्यं वा सत्प्रतिपक्षः। साध्यासमानाधिकरणो हेतुः साध्यसामानाधिकरण्याभावव्याप्यवान् हेतुः हेतुनिष्ठं साध्यासामानाधिकरण्यं तद्व्याप्यं वा प्राचां मते विरोधः। नवीनमते तु साध्यव्यापकीभूताभावप्रतियोगित्वं विरोधः। हेत्वभाववान् हेत्वभावव्याप्यवान् हेतुमदन्यः हेतुमदन्यत्वव्याप्यवान् वा पक्षः पक्षवृत्तिः तादृशाभावादिर्वा स्वरूपासिद्धिः। अन्यत्रापि वैपरीत्यमूह्यम्। पक्षतावच्छेदकाभाववान् तद्व्याप्यवांश्च पक्षः पक्षाप्रसिद्धिः। साध्यतावच्छेदकाभाववत् तद्व्याप्यवद्वा साध्यं साध्याप्रसिद्धिः। हेतुतावच्छेदकाभाववान् तद्व्याप्यवान्वा हेतुः साधनाप्रसिद्धिः। स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितहेतुतावच्छेदकवत्त्वं व्याप्यत्वासिद्धिः। साध्याभाववद्वृत्तिर्हेतुः पूर्वपक्षीयव्यभिचारः। साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं सिद्धान्तीयव्यभिचारः। इत्युभावन्वयव्यभिचारौ। साध्याभावाव्यापकाभावप्रतियोगित्वं व्यति-

रेकव्यभिचारः साधारणात्मकः । केवलान्वयिपक्षकत्वमनुपसंहारित्वमिति प्रांचः । अत्यन्ताभावाप्रतियोगिसाध्यकत्वं हेतुवृत्त्यन्ताभावाप्रतियोगित्वं वाऽनुपसंहारित्वमिति नवीनाः । सपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिः हेतुरसाधारण इति प्रांचः । साध्यतदभाववदवृत्तिर्हेतुः स इति तु नवीनाः । अमीषां मते गगनाद्यवृत्तिपदार्थ एव लक्षणलक्ष्यः । अत्र प्रमोदाय वृद्धसंमतासाधारणगतपदानां कृत्यं विचार्यते ।

**॥ सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः ॥**

अत्र मात्रपदं कात्स्न्यार्थिकम् । सर्वपदं च सपक्षे विपक्षे चान्वेति । तथाच सर्वसपक्षव्यावृत्तः सर्वविपक्षव्यावृत्तः सर्वपक्षवृत्तिर्हेतुरसाधारण इति फलितं । अत्र सपक्षव्यावृत्तत्वानुपादाने एतत्पर्वतो वन्हिमान् धूमादित्यादौ ह्रदादिरूपसर्वविपक्षव्यावृत्ते सर्वपक्षवृत्तौ धूमादिरूपसद्धेतावतिप्रसङ्गः । अतः सपक्षव्यावृत्त इति । पुनरयोगोलकादियत्किंचित्सपक्षव्यावृत्ते तत्रैवातिव्याप्तिवारणाय सर्वसपक्षेति । एतत्पर्वतरूपे पक्षे सर्वत्वं बाधितमितिचेन् वृक्षः कपिसंयोगी एतद्वृक्षत्वाद्वृक्षांतरवदित्यादौ दोषो द्रष्टव्यः । तत्रापि भूतलादिरूपयत्किंचित्सपक्षव्यावृत्तिमादाय दोषवारकतया सर्वपदसार्थक्यस्य वृक्षे पक्षे अनेकत्वस्य च सत्त्वेन सर्वत्वाबाधस्य च संभवात् । एवं विपक्षव्यावृत्तत्वानुपादाने ह्रदो वन्हिमान् जलादित्यादौ विरुद्धे सर्वपक्षवृत्तौ पर्वतमहानसादिरूपसर्वसपक्षव्यावृत्ते जलादिहेतावतिव्याप्तिः । अतो विपक्षव्यावृत्तत्वनिवेशः । तत्रापि गुणकर्मादिरूपयत्किंचिद्विपक्षव्यावृत्तत्वसत्त्वेनोक्तदोषतादवस्थ्यवारणाय सर्वपदम् । सर्वान्तःपात्युदधिव्यावृत्तत्वाभावान्नातिव्याप्तिः । न

चास्यापि लक्ष्यत्वमेवेति वाच्यम् । तथासत्यसंकीर्णोदाहरणाभावेन पृथग्दोषत्वाभावापत्तेः । पर्वतो वन्हिमान् गगनादित्यत्र सर्वसपक्षविपक्षव्यावृत्ते स्वरूपासिद्धेऽसाधारणतया वृद्धासंमतेऽतिव्याप्तिवारणाय पक्षवृत्तीति । वृक्षः कपिसंयोगी एतत्त्वादित्यादौ तादृशेऽसाधारणतया तैरनङ्गीकृतेऽतिव्याप्तिवारणाय सर्वपदम् । तस्य च भागासिद्धत्वात् सर्वपक्षवृत्तित्वाभावान् नातिव्याप्ति । तादृशश्च हेतुः शब्दोऽनित्यः शब्दत्वादित्यत्र शब्दत्वरूपः । अस्य चासाधारणत्वं दशाविशेष एव । अत एवास्यानित्यदोषत्वं प्राचीनसंमतम् । यतः पक्षे साध्यनिश्चयदशायां पक्षरूपसपक्षव्यावृत्तत्वाभावेनासाधारण्याभावादिति ।

अत्र प्रसङ्गसङ्गत्या सर्वपदार्थो विचार्यते । अनेकत्वसहितमशेषत्वं सर्वपदप्रवृत्तिनिमित्तम् । अनेकत्वं च सर्वपदसमभिव्याहृतपदार्थतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वम् । अशेषत्वं चोद्देश्यतावच्छेदकव्यापकविधेयव्याप्यधर्मवत्त्वम् । यथा सर्वाणि द्रव्याणि गुणवन्तीत्यादौ सर्वपदसमभिव्याहृतं द्रव्यपदम् । तदर्थतावच्छेदकं द्रव्यत्वं तदधिकरणं पटस्तद्वृत्तिर्यो भेदो घटो नेति प्रतीतिसाक्षिकः तत्प्रतियोगित्वं घटरूपद्रव्ये । एवमुद्देश्यतावच्छेदकं द्रव्यत्वं तद्व्यापकः गुणवत्त्वरूपविधेयव्याप्यः यो धर्मः यावद्द्रव्यगतयावत्त्वरूपो धर्मः तद्वत्त्वं द्रव्ये इति सर्वत्ववन्ति द्रव्याणि भवन्ति गुणवदभिन्नानि । एवमन्यत्रापि । अत्र सर्वपदेऽनेकत्वमात्रस्य प्रवृत्तिनिमित्तत्वाङ्गीकारे यावद्द्रव्येषु रूपवत्त्वाभावेऽप्यनेकेषु रूपवत्त्वाबाधात्सर्वं द्रव्यं रूपवदिति प्रयोगस्याबाधितार्थकतया प्रामाणिकत्वापत्तिः । अशेषत्वमात्रस्य प्रवृत्तिनिमित्तत्वाङ्गीकारे सर्वं गगनं शब्दवदिति

प्रयोगस्य प्रामाणिकत्वापत्तिरिति । अतः उभयावच्छिन्ने सर्वपदस्य एकैव शक्तिरिति नैकैकधर्मपरित्यागादपरधर्ममात्रबोध इति नोक्तापत्तिरित्यलम् । एतादृशसद्धेतुरपि दशाविशेषेऽसद्धेतुर्भवतीत्यत्र राजाज्ञाद्यभावेनास्य लक्षणस्यानादरणीयतयाऽन्यदेवासाधारणलक्षणतयोरर्थकार्षुर्न्याः । गौरवभिया यथाश्रुतमात्रं परिष्कृत्य विरमति लेखनी ।

**इति तर्कसंग्रहार्थसंग्रहे अनुमानपरिच्छेदः ॥**

शाब्दबोधस्य शक्तिज्ञानजन्यत्वेन शक्तिज्ञानस्योपमित्यात्मकत्वेन फलत. कार्यकारणभावादुपमानानन्तरं शब्दं निरूपयति ।

**॥ आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता ॥**

प्रयोगहेतुभूतयथार्थज्ञानवत्त्वमाप्तस्य लक्षणम् । "अर्थं बुध्वा वाक्यरचने"तिन्यायेन प्रमाणशब्दप्रयोगं प्रत्यर्थप्रमायाः हेतुत्वात् । उन्मत्तविप्रलंभकादिव्युदासाय यथार्थपदम् । तथाचान्यस्य वैयर्थ्यात् यथार्थज्ञानजन्यवाक्यत्वं शब्दस्य लक्षणम् । ज्ञानध्वंसेऽतिव्यातिवारणाय वाक्यत्वोपादानम् । अनाप्तवाक्येऽतिव्याप्तिवारणाय जन्यत्वान्तं । नच लक्ष्यतावच्छेदकाक्रान्तानाप्तशब्दे लक्षणाभावादव्याप्तिरिति शङ्कनीयम् । मूलस्थशब्दपदेन प्रमाणशब्दस्यैव लक्ष्यतयाऽवधारणात् । तथाच प्रमाणशब्दत्वमेव लक्ष्यतावच्छेदकमिति नोक्तदोषः । अत्रायं क्रमः । पदज्ञानं करणम् । वृत्तिरूपसंबन्धज्ञानद्वारा पदजन्यपदार्थोपस्थितिर्व्यापारः । शाब्दबोधः फलम् । वृत्तिश्च शक्तिलक्षणान्यतररूपा । तत्र शक्तिरीश्वरेच्छारूपेति मूल एव स्पुटम । सा चैकविधैव । लक्षणा तु द्विविधा जहती अजहती चेति । तृतीयातु नैयायिकैरनभ्युपगमान्न विभक्ता ।

तत्र शक्यमर्थं जहती नाम तद्विषयकशाब्दबोधजनिकेतीयमन्वर्था संज्ञा। एवमजहतीत्यपि संज्ञा। तत्र जहल्लक्षणात्वं नाम लक्ष्यविशिष्टप्रतीतिजनकत्वम्। प्रतीतौ वैशिष्ट्यं च स्वनिष्ठलक्ष्यतावच्छेदकावच्छिन्नविषयतानिरूपकत्वस्वभिन्नशक्यार्थनिष्ठविषयतानिरूपकत्वोभयसंबन्धेन। अत्र द्वितीयसंबन्धनिवेशादजहल्लक्षणायां नातिव्याप्तिः। प्रथमसंबन्धनिवेशान्न शक्तावतिव्याप्तिः। तत्रापि विषयतायां लक्ष्यतावच्छेदकरूपावच्छिन्नत्वनिवेशात्प्राचीननतरीत्या वेदान्तिमतरीत्या वा न जहदजहल्लक्षणायामतिव्याप्तिः। तस्याः तत्त्वमसीत्यादौ धर्मपरित्यागेन चिन्मात्रबोधकत्वात्। अजहल्लक्षणात्वं नाम लक्ष्यविशिष्टप्रतीतिजनकत्वम्। वैशिष्ट्यं च स्वनिष्ठलक्ष्यतावच्छेदकावच्छिन्नविषयतानिरूपकत्वस्वभिन्नशक्यार्थनिष्ठविषयतानिरूपकत्वैतदुभयसंबन्धेन। प्रथमसंबन्धनिवेशान्न शक्तावतिव्याप्ति। द्वितीयसंबन्धनिवेशान्न जहल्लक्षणायामतिव्याप्तिः। काकेभ्यो दधि रक्ष्यतामित्यादौ दध्युपघातकत्वरूपलक्ष्यतावच्छेदकरूपेण शक्यकाकतदितरबिडालादिबोधकत्वाल्लक्षणसमन्वयः इयमेव लक्षणा शास्त्रे तत्र तत्रोपलक्षणतया गीयते। अतो वृत्त्यन्तराभावान्न विभागव्याघातः। आकांक्षादित्रयस्य शाब्दहेतुत्वमभिहितं मूले। तच्च न स्वरूपसत एव तस्य। अपरिज्ञाताकांक्षाकस्य पुंसः शाब्दबोधानुदयात्। असत्यामप्याकांक्षायां तज्ज्ञानाच्छाब्दबोधोदयाच्चान्वयव्यतिरेकाभ्यां तज्ज्ञानमेव तद्धेतुरित्यवसीयते। तथाचाऽऽकांक्षा नाम अव्यवहितोत्तरत्वसंबन्धावच्छिन्नयत्पदनिष्ठप्रकारताकयत्पदविशेष्यकनिश्चयाभावः शाब्दबोधाभावप्रयोजकः तेन संबन्धेन तत्पदे तत्पदवत्त्वम्। यत्तदा-

दिघटितत्वादननुगमाशङ्कायां शाब्दबोधाभावप्रयोजकाभावप्रतियोगिज्ञाननिरूपितप्रकारताविशिष्टविशेष्यतावत्त्वमाकांक्षा । वैशिष्ट्यं च स्वावच्छेदकसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत्पदनिष्ठत्वस्वनिरूपितत्वोभयसंबन्धेन । इयं च शाब्दप्रमाकारणीभूताकांक्षा । भ्रमसाधारणी तु सा तादृशज्ञाननिरूपितयत्किंचित्पदनिष्ठप्रकारतानिरूपितविशेष्यतावत्त्वमेवेत्यवधेयम् ।

॥ अर्थाबाधो योग्यता ॥

अर्थबाधनिश्चयाभाव इत्यर्थः । बाधनिश्चयो नामासंसृष्टत्वज्ञानम् । तदभावश्च स्वरूपसन्नेव हेतुः । नहि शाब्दबोधे संसृष्टत्वज्ञानं कारणम् । शाब्दबोधस्यैव संसृष्टत्वज्ञानरूपत्वात् । स्वस्य स्वकारणत्वायोगात् । असंसृष्टत्वज्ञानस्य च प्रतिबन्धकतया तदभावस्य हेतुत्वे कस्यापि विवादाभावात् । प्रतिबन्धकाभावकारणतायाः सिद्धान्ते अङ्गीकारात् । अस्य च ज्ञानस्य तदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वात् । प्रतिबन्धकाभावस्य च स्वरूपसत एव कारणत्वात् । नहि कार्यसामान्यं प्रतिबन्धकाभावज्ञानमपेक्षत इति ।

॥ अविलंबेनोच्चारणं सन्निधिः ॥

अत्र पदानामविलंबितत्वं सन्निधिः । उच्चारणन्तु तदुपयोगितयाऽभिहितमिति बोध्यम् । अविलंबितत्वं च पदयोः परस्परं पूर्वापरवृत्तित्वम् । इदमपि ज्ञातमेव कारणम् । तेष्वव्यवहितत्वज्ञानेन शाब्दबोधोदयदर्शनादिति ।

इति तर्कसंग्रहार्थसंग्रहे शब्दपरिच्छेदः ॥

॥ एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानं संशयः ॥

किंनाम संशयस्य लक्षणम् । नचैकधर्मिविशेष्यकत्वे सति विरुद्धनानाधर्मप्रकारकत्वं तत् । इमौ घटपटावित्यादिसमूहालंबनज्ञानेऽतिव्याप्तेः । घटपटाद्यनेकधर्मिविशेष्यकत्वेऽपि तत्र "शतं पंचाशदि"तिन्यायेनैकधर्मिविशेष्यकत्वस्यापि सत्त्वात् । नच किंचिद्धर्मिविशिष्टान्यत्वमेकधर्मिविशेष्यकत्वम् । वैशिष्ट्यं च स्वविशेष्यकत्वस्वभिन्नविशेष्यकत्वैतदुभयसंबन्धेन । तथाचोक्तोभयसंबन्धेन किंचिद्धर्मिविशिष्टत्वान्न समूहालंबनेऽतिव्याप्तिरिति वाच्यम् । तथासत्यात्मा नित्यो न वा स्थाणुः पुरुषो नवेत्यादिसंशयेऽव्याप्तिप्रसङ्गात् । तत्रात्मत्वस्थाणुत्वादिरूपेण निखिलानामात्मनां स्थाणूनां च विशेष्यत्वेन स्वपदेन यत्किंचिदात्मव्यक्त्युपादाने तद्विशेष्यकत्वतद्भिन्नात्मविशेष्यकत्वयोः सत्त्वादुक्तोभयसंबन्धेन किंचिद्धर्मिविशिष्टत्वेन तदन्यत्वाभावात् । एवं स्थाणुविशेष्यकसंशयेऽपि । न च किंचिद्धर्मविशिष्टान्यत्वं तदर्थः । वैशिष्ट्यं च स्वावच्छिन्नविशेष्यकत्वस्वभिन्नधर्मावच्छिन्नविशेष्यकत्वोभयसंबन्धेन । नाधुनाऽव्याप्तिः । आत्मत्वेन रूपेण नानात्मनां विशेष्यत्वेऽपि विशेष्यतावच्छेदकधर्मद्वयाभावान्नोभयसंबन्धेन धर्मविशिष्टत्वमिति वाच्यम् । एवमप्यात्मगगनोभयं नित्यं नवेत्यादिसंशयेऽव्याप्तेरनिवारणात् । तत्र विशेष्यतावच्छेदकस्यात्मत्वगगनत्वोभयस्य सत्त्वेन स्वपदेन प्रत्येकमेकैकधर्मोपादाने चोक्तोभयसंबन्धेन तद्वैशिष्ट्यस्यैव सत्त्वात् । न च विशेष्यताविशिष्टान्यत्वं तदर्थः । वैशिष्ट्यं च स्वनिरूपकत्वस्वभिन्नविशेष्यतानिरूपकत्वोभयसंबन्धेन । एवं च नोक्तस्थलेऽव्याप्तिः । तथाहि । आत्मा

नित्यो नवेत्यादावात्मत्वेन रूपेण निखिलात्मनां विशेष्यत्वेऽपि सा विशेष्यता एकैव । सामान्यधर्मावच्छिन्नविषयताया एकस्या एव सामान्याश्रययावव्द्यक्तिवृत्तित्वात् । समूहालंबन एव विशेष्यताभेदाङ्गीकारात् । अन्यथा समूहालंबनात्संशयस्य वैलक्षण्यं न स्यात् । अत एवात्मगगनोभयं नित्यं नवेत्यादावपि नाव्याप्तिः । तत्रोभयत्वावच्छिन्नविशेष्यताया एकत्वादिति वाच्यम् । तथापि घटो द्रव्यमित्यादिनिश्चयेऽतिव्याप्तिः । तत्र प्रकारीभूतद्रव्यत्वस्य गुणत्वविरुद्धत्वेन विरुद्धधर्मप्रकारकत्वाद्घटत्वरूपैकधर्मावच्छिन्नविशेष्यकत्वाच्च । विरुद्धधर्मप्रकारकमिति मूलस्वारस्याद्विरोधविषयकत्वमपि संशये निवेश्यते । अथवा संशये सर्वत्र विरोधो भासते नेतरत्रेतिवाऽभ्युपगम्योक्तातिव्याप्तिवारणेऽपि गुणत्वविरुद्धद्रव्यत्ववान् घट इति निश्चये प्रकारकोटिप्रविष्टतया विरोधविषयकत्वस्यापि सत्त्वेनातिव्याप्तेर्दुष्परिहरत्वात् । नच नानाधर्मप्रकारकत्वान्नातिव्याप्तिरिति वाच्यम् । नानाधर्मप्रकारकत्वं हि नानात्वाश्रयधर्मप्रकारकत्वम् । द्रव्यत्वस्यापि घटत्वगुणत्वादिसाहाय्येन द्वित्वत्रित्वादिरूपनानात्वाश्रयत्वात् । यदि नानाधर्मप्रकारकत्वं नाम किंचिद्धर्मविशिष्टत्वम् । वैशिष्ट्यं च स्वप्रकारकत्वस्वभिन्नधर्मप्रकारकत्वोभयसंबन्धेन । तथाचोक्तनिश्चये द्रव्यत्वरूपैकधर्मप्रकारकत्वान्नातिव्याप्तिः । संशये नियमेन धर्मद्वयस्य प्रकारत्वादिति विभाव्यते तदा रूपी घट इत्यादिनिश्चयेऽतिव्याप्तिः । तत्र घटरूपैकधर्मिविशेष्यकत्वसत्त्वात्किंचिद्धर्मविशिष्टत्वाच्च । तथाहि । तत्र रूपत्वेन रूपेण निखिलरूपाणां प्रकारतया भानेन किंचिद्धर्मपदेन यत्किंचिद्रूपपरिग्रहे स्वपदग्राह्यतत्प्रकारकत्वतद्भिन्नधर्मप्रकार-

कन्वयोः सत्त्वेनोक्तोभयसंबन्धेन किंचिद्धर्मवैशिष्ट्यस्याव्याहतत्वादिति । नच स्वावच्छिन्नप्रकारतानिरूपकत्वस्वभिन्नधर्मावच्छिन्नप्रकारतानिरूपकत्वोभयसंबन्धेन किंचिद्धर्मवैशिष्ट्यस्य विवक्षितत्वेन घटो रूपीत्यादिनिश्चयेषु च प्रकारतावच्छेदकीभूतरूपत्वस्यैक्येनातिव्याप्तेरभावादिति वाच्यम् । घटो रूपस्पर्शोभयवानित्यादिनिश्चयेष्वतिव्याप्तेस्तथापि वारणासंभवात् । तत्र रूपत्वस्पर्शत्वरूपानेकप्रकारतावच्छेदकधर्मसद्भावेन किंचित्पदेन रूपत्वादिधर्मपरिग्रहे स्वावच्छिन्नप्रकारताकत्वस्वभिन्नस्पर्शत्वधर्मावच्छिन्नप्रकारताकत्वोभयसंबन्धेन किंचिद्धर्मवशिष्ट्यस्य सत्त्वात् । अपि चैवं विवक्षणे घटो द्रव्यं न वा स्थाणुर्वा पुरुषो वाऽयमित्यादिसंशयेष्वव्याप्तिः । तत्र पुरुषत्वादिप्रकाराणां जातित्वेन स्वरूपतो भानसंभवेन किंचिद्धर्मावच्छिन्नत्वस्य प्रकारतायामभावादिति संशयलक्षणमेव संशयग्रस्तमिति । अत्र वयं ब्रूमः । प्रकारताविशिष्टविशेष्यतानिरूपकज्ञानत्वं संशयत्वम् । वैशिष्ट्यं च स्वनिरूपितत्वस्वभिन्नप्रकारतानिरूपितत्वोभयसंबन्धेन । तथाच नोक्तदोषाणामवकाशः । तथाहि । रूपी घटः रूपस्पर्शोभयवान् घट इत्यादिनिश्चयेष्वनेकेषां प्रकाराणां भानेऽपि तावद्गता प्रकारता एकैवेति प्रकारताद्वयनिरूपितत्वस्य विशेष्यतायामभावान्नातिव्याप्तिः । एवं समूहालंबने प्रकारताद्वयसद्भावेऽपि विशेष्यताया अपि द्वित्वेन प्रकारताद्वयनिरूपितत्वस्यैकस्यां विशेष्यतायामभावान्न तत्राप्यतिव्याप्तिः । संशये च प्रकारताद्वयनिरूपिता एकैव विशेष्यता भवतीति नाव्याप्तिः । नवा प्रकारतायाः क्वचिन्निरवच्छिन्नत्वेन किंचिद्धर्मावच्छिन्नत्वविरहप्रयुक्त उक्तो दोषः । प्रकारतायामवच्छिन्नत्वस्य

प्रकृतेऽनिवेशात् । एकत्र द्वयमिति रीत्या जायमाननिश्चयात्मकज्ञाने अतिव्याप्तिवारणाय मूले नानाधर्मप्रकारकत्वमात्रमनिवेश्य विरुद्धपदनिवेशः । तेन विरोधविषयकत्वं लभ्यत इति विरोधाविषयकोक्तनिश्चये नातिव्याप्तिः । एवं च एकधर्मीत्यादिमूलोक्तं लक्षणं सुस्थमिति । एतेन निश्चयान्यज्ञानत्वं संशयत्वमिति वक्तुं सुशकत्वेनेयानायासो ग्रन्थकृतो व्यर्थ इत्याशङ्का परास्ता । तथासति संशयान्यज्ञानस्य निश्चयतयाऽन्योन्याश्रयतापत्तेः । नच निश्चिनोमीत्याद्यनुव्यवसायसिद्धजातिमत्त्वमेव निश्चयत्वमित्यन्योन्याश्रयत्वप्रसक्तेरेवाभावेन लाघवात्तद्भिन्नज्ञानत्वमेव संशयत्वमिति वक्तुमुचितमिति वाच्यम् । तथासति सन्देह्मीत्यनुव्यवसायसिद्धजातिमत्त्वमेव संशयत्वमिति तद्भिन्नज्ञानत्वं निश्चयत्वमित्यपि विनिगमनाविरहात् वक्तुं शक्यत्वेन एकत्र पक्षपातिन्या युक्तेरभावेनान्योन्याश्रयतायाः दुष्परिहरत्वादिति साधूक्तं मूलकृता एकधर्मीत्यादीति संक्षेपः ।

**॥ व्याप्यारोपेण व्यापकारोपस्तर्कः ॥**

साध्याभावरूपव्याप्यप्रकारकाहार्यज्ञानजन्यहेत्वभावरूपव्यापकप्रकारकाहार्यज्ञानं तर्कः ।

**॥ सर्वेषामनुकूलतया वेदनीयं सुखम् ॥**

अत्र तृतीयार्थः प्रकारत्वम् । वेदनीयमित्यत्र विद्ज्ञाने इत्यस्मात् कर्मणि अनीयर्प्रत्ययो विषयतावदर्थकः । तथा चानुकूलत्वप्रकारकज्ञानविषयत्वं लक्षणम् । अनुकूलत्वं चेष्टत्वम् । नन्विदं लक्षणं "सहधर्मिणीयमस्यानुकूला"इत्यादिसर्वजनानुभवबलेन योषिदादावतिव्याप्तमिति चेत्सत्यम् । "ज्ञानेच्छाद्वेषदुःखेषु दुःखहेतौ च वेदने"त्यनुशासन-

बलाद्वेदनापदस्येच्छावाचितया तदुपरि विषयतावदर्थकप्रत्ययविधाने च इच्छाविषयीभूतं वेदनीयमिति लभ्यते। तत्र चेच्छायां तृतीयार्थवैशिष्ट्यस्यान्वयः। प्रकृते अनुकूलत्वं इच्छानधीनत्वम्। तथाचेच्छानधीनेच्छाविषयत्वं सुखस्य लक्षणं फलितम्। फलेच्छातो भवत्युपायेच्छा फलेच्छा तु न कस्यचिदर्थस्येच्छातः संपद्यत इति नासंभव। न वा योषिदादिष्वतिव्याप्तिः। योषिदादिविषयकेच्छायाः सुखरूपफलेच्छाधीनतयेतरेच्छानधीनत्वाभावादिति। सर्वेषामिति षष्ठ्यर्थः समवेतत्वं। तच्चेच्छायामन्वेति। नन्विदं लक्षणमव्याप्तं। अन्यायार्जितद्रव्योपभोगजन्ये योषिदादिजन्ये वा सुखे सर्वान्तःपातिविरक्तेच्छाविषयत्वाभावादिति चेदत एव स्वमूलव्याख्याता स्वयमेवान्नंभट्टो दीपिकायां सुख्यहमित्यनुभवसिद्धजातिमत्त्वमिति लक्षणान्तरं प्राणैषीत्। एतेन कस्यामपीच्छायां सर्वसमवेतत्वाभावादसंभववारणाय तत्परिष्कारायासः केषांचिदपास्तः। तदघटितस्यैव लक्षणस्य करणादिति। एवमितरद्वेषानधीनद्वेषविषयत्वं दुःखस्य लक्षणम्। तत्रापि सर्वेषामिति सत्त्वेन दुःखस्य समदुःखसुखयोगिद्वेषाविषयत्वेनाव्याप्तिपरिहाराय दुःखीत्याद्यनुभवसिद्धजातिमत्त्वं लक्षणमित्याकलनीयम्॥

॥ **संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्चेति** ॥

यद्यपि संस्कारविभागावसरे सामान्यलक्षणाकथनेन मूलस्य न्यूनता तथापि संस्कारत्वजातिमत्त्वं तस्य लक्षणम्। मूलस्य तु तादृशजात्यवच्छिन्नवाचकपदप्रयोगादेव तत्सिद्धेर्न न्यूनता। एवं भावनास्थितिस्थापकयोर्लक्षणस्य पृथग् वक्ष्यमाणतया वेगस्य च पृथग् लक्षणस्यानुक्तत्वात्

वेगत्वजातिमत्त्वं तस्य लक्षणमिति ज्ञेयम् ।

॥ अनुभवजन्या स्मृतिहेतुर्भावना ॥

अत्र संस्कारस्य फलनाश्यतया स्मृत्युत्पत्तौ संस्कारनाशे स्मृत्यन्तरानुत्पत्तिः । तदर्थं संस्कारान्तरकल्पनेऽनुभवाभावेनाकारणकार्योत्पत्तिप्रसङ्गः । स्मृतेः कारणत्वाङ्गीकारेऽनुभवजन्यत्वघटितलक्षणस्याव्याप्तिरित्यादिदोषनिरासाय स्मृत्यनुभवसाधारणज्ञानत्वावच्छिन्नपरमनुभवपदमिति ज्ञेयम् ।

॥ अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः ॥

अन्यथेत्यस्य प्रकारान्तरेणेत्यर्थः । तच्च स्वसंयुक्तदेशभिन्नदेशसंयोगः । तृतीयार्थः विधेयत्वम् । कृतत्वं कृत्युद्देश्यत्वम् । प्रतियोगित्वं षष्ठ्यर्थः । तस्य तदवस्थापदार्थैकदेशे संयोगेऽन्वयः । तदवस्था तद्देशसंयोगः । तदापादकत्वं तज्जनकत्वं । तथाच किंचिद्वस्तुनः स्वसंयुक्तदेशभिन्नदेशसंयोगविधेयककृत्युद्देश्यस्य तद्देशसंयोगजनकत्वे सति संस्कारत्वं स्थितिस्थापकत्वम् । देशविशिष्टसंयोगजनकत्वे सति संस्कारत्वं तल्लक्षणमिति पर्यवसन्नम् । वैशिष्ट्यं च स्वभिन्नदेशसंयोगविधेयककृत्युद्देश्यनिष्ठप्रतियोगितानिरूपकत्वस्वानुयोगिकत्वोभयसंबन्धेन ।

॥ नित्यमेकमनेकानुगतं सामान्यम् ॥

नन्विदं लक्षणं नित्यसंयोगाङ्गीकर्तृमतेऽतिव्याप्तम् । तत्र नित्यत्वे सत्यनेकसमवेतत्वसत्त्वात् । अपिचासंभवः । अनेकत्वस्य संख्यारूपत्वेन गुणादौ तदभावेन गुणत्वादावनेकवृत्तित्वाभावात् । द्रव्यत्वादौ च संख्यारूपैकत्वाभावात् । अपिच प्रलयकाले घटादीनां नाशे आश्रयाभावेन

घटत्वादीनां निराश्रितत्वेन समवेतत्वाभावप्रसङ्गश्चेति चेन्मैवम् । नित्यसंयोगाङ्गीकर्तृमते तत्रातिव्याप्तिवारणायैव मूले एकपदमुपात्तम् । अन्यथा तद्वैयर्थ्यात् । तस्यचैकविधमित्यर्थः । ऐकविध्यं च नित्यत्वेन । तथाच विशेषविधानस्य शेषनिषेधफलकत्वेन नित्यत्वे विहितेऽनित्यत्वाभावोऽपि गम्यते । तथाचानित्यत्वाभाववत्त्वे सत्यनेकसमवेतत्वं लक्षणम् । तथाच संयोगे नित्यानित्योभयात्मकेऽनित्यत्वस्यापि सत्त्वेन तदभावाभावान्नातिव्याप्तिः । एतेनैकमित्यस्य संख्यावदर्थकत्वे संयोगेऽतिव्याप्तिरेव । अपेक्षाबुद्धिविशेषविषयत्वरूपाया असंभववारणाय विवक्षितायास्तत्रापि सत्त्वात् । स्वसजातीयद्वितीयरहितार्थकत्वे चासंभवः । सामान्यस्यापि घटत्वपटत्वादिरूपस्वसजातीयद्वितीयवत्त्वादिति परास्तम् । अन्यादृशैकत्वस्य परिष्करणात् । अत एव संयोगेऽतिव्याप्तिवारणायाश्रुतसंयोगभिन्नत्वं प्रवेश्य श्रुतैकत्वपरित्यागः केषांचिन्नादरणीयः । यच्चाशंकितं गुणादावनेकत्वाभावाद्गुणत्वादावव्याप्तिरिति । तदपि न । अनेकसमवेतपदस्य किंचिद्वस्तुविशिष्टार्थकत्वेनादोषात् । वैशिष्ट्यं च । स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसंबन्धेन । अथवा भेदविशिष्टत्वं तत् । वैशिष्ट्यं च । स्वप्रतियोगिसमवेतत्वस्वानुयोगिसमवेतत्वोभयसंबन्धेन । यच्चोक्तमाश्रयघटादिनाशे जातेरवृत्तित्वप्रसङ्ग इति । तदप्यचारु । पदार्थानां व्याश्रयत्वेन घटाद्यनित्याश्रयनाशेऽपि नित्यकालरूपाश्रये कालिकेन वृत्तेरबाधात् । ननु विषमोऽयमुपन्यासः । संयोगसामान्ये यद्यतिव्याप्तिरुच्येत तदा नित्यानित्योभयात्मके तत्रैकविधत्वं नास्तीति वक्तुं शक्यते । नचैवम् । किंनाम विभुद्वयसंयोग एवातिव्याप्तिरभिहिता । तस्य चैकविध-

त्वादतोऽतिव्याप्तिस्तत्र दुष्परिहरेति चेदस्त्यत्राभिप्रायविशेषः । अनित्यावृत्तिवस्तुविशिष्टवृत्तिविभाजकोपाधिमत्त्वस्य तदर्थत्वात् । वस्तुवैशिष्ट्यं च स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसंबन्धेन । तथाच संयोगत्वरूपविभाजकोपाधेरेकपदोपसन्दानलभ्यानित्यावृत्तित्वाभावान्नातिव्याप्ति । अथवाऽनेकसमवेतत्वं विशेषेष्वतिव्याप्तमिति तत्रातिव्याप्तिवारणायैकपदप्रक्षेपः । इदं चैकं सदनेकसमवेतमिति क्रियाविशेषणम् । तथाचानेकसमवेतं यदेकैकमित्यर्थलाभादेकैकस्वनेकसमवेतत्वाभावान्नातिव्याप्तिः । एकैकस्या एव घटत्वादिरूपायाः जातेरनेकसमवेतत्वान्नासंभवः । तदर्थश्च वस्तुविशिष्टत्वं भेदविशिष्टत्वं वा । संबन्धश्चोक्त एव । एतेन नित्यसंयोगानङ्गीकर्तृमते मूलोक्तमेकमिति पदं व्यर्थमिति न कुचोद्यावकाश इत्युक्तं भवति । विशेषेष्वतिव्याप्तिवारकतया तत्सार्थक्यात् । अनित्यावृत्त्यनित्यसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं सामान्यलक्षणम् । अनित्यावृत्तित्वनिवेशात् द्रव्यत्वादिकमादाय द्रव्ये नातिव्याप्तिः । अनित्यसमवेतवृत्तित्वनिवेशान्न विशेषत्वमादाय सा । तेषां नित्यमात्रसमवेतत्वात् । तत्रापि समवेतत्वनिवेशात् न समवायत्वमादाय सा समवायत्वस्य समवेतत्वाभावात् सर्वमिदं लक्षणं जातिरूपसामान्यस्यैवेत्यवधेयम् । अतो जगदीशसंमतोपाधिरूपसामान्ये नोक्तलक्षणस्याव्याप्तिशङ्का । तेन जगदीशेन "सामान्यं द्विविधं जातिरूपमुपाधिरूपं चेति । तत्र जातिलक्षणमभिहितम् । उपाधिलक्षणन्तु स्वरूपसंबन्धावच्छिन्नवृत्तित्वे सति समवायभिन्नत्वे सति भावत्वम् । अभावेऽतिव्याप्तिवारणाय भावत्वनिवेशः । "उपाधिर्द्विविधः । अखण्डः सखण्डश्चेति ।

अनुगतः पदार्थत्वादिरखंडः प्रत्येकविश्रान्तः तत्तद्व्यक्तित्वादिः सखण्ड" इति निरूपितम् । जातिरूपसामान्यं त्रिविधम् परमपरं परापरं चेति । तत्र स्वभिन्नत्वस्वव्याप्यत्वोभयसंबन्धेन जातिविशिष्टान्यजातित्वं परजातिलक्षणम् । स्वभिन्नत्वस्वव्यापकत्वोभयसंबन्धेन जातिविशिष्टान्यजातित्वं अपरजातेर्लक्षणम् । स्वभिन्नजातिव्यापकत्व स्वभिन्नजातिव्याप्यत्व तादात्म्यत्रितयसंबन्धेन जातिविशिष्टजातित्वं परापरजातेर्लक्षणम् । बाधकाभावादनुगतप्रतीतिबलाच्च जातिः सिध्यतीति स्थिते बाधकानि निरूप्यन्ते ।

**व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।**
**रूपहानिरसंबन्धो जातिबाधकसंग्रहः ।**

इत्यत्र जातिपदं जाति जातित्वान्यतरपरं। जातेः षष्ठ्यर्थः ज्ञाननिष्ठं प्रतिबध्यत्वं । बाधकत्वं च प्रतिबन्धकतावज्ज्ञानविषयत्वम् । तथाच जातिजातित्वान्यतरविषयकज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावज्ज्ञानविषयविषयकज्ञानजनकसंकुचितशब्दइति जातिबाधकसंग्रहपदार्थः । तत्र व्यक्तेरभेदो नाम स्वाश्रयव्यक्तेरैक्यम् । तच्च स्ववृत्तित्वस्वभिन्नवृत्तित्वोभयसंबन्धेन किंचिद्वस्तुविशिष्टान्यत्वं स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वं वा । अतो व्यक्तेरैक्यस्य स्वाश्रयगतत्वेन साधनीयजातित्वाभावस्य गगनत्वादिगतत्वेन हेतुसाध्ययोर्वैयधिकरण्यशङ्काऽपास्ता । अनुमानं च गगनत्वं न जातिः वस्तुविशिष्टान्यत्वात् भेदविशिष्टान्यत्वाद्वा व्यतिरेकेण घटत्वादिवत् । तुल्यत्वं च समनियतव्यक्तिकत्वं । तच्च स्वव्याप्यत्वस्वव्यापकत्वोभयसंबन्धेन जातित्वेनाभिमतधर्मविशिष्टत्वम् । अत्रापि कलशत्वं न घट-

त्वभिन्नजातिः घटत्वसमनियतत्वात् व्यतिरेकेण पटत्वादिवत्। अत्राप्रयोजकत्वशङ्कायां घटत्वकलशत्वादिनानाजातिस्वीकारे विनिगमनाविरहेणैकशेषीकर्तुमशक्यतया अनेकेषां घटपदशक्यतावच्छेदकत्वकल्पनाप्रयुक्तं गौरवं स्यादिति बाधकमुन्नेयम्। एवमनेकधर्मेषु कार्यतावच्छेदकत्वकल्पनाप्रयुक्तमपि गौरवं बोध्यम्। अपिचानेकधर्मेषु स्वगतरूपादिकारणतावच्छेदकत्वकल्पनाप्रयुक्तं तदित्यपि ध्येयम्। संकरः परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः। एकत्र समावेशो नाम सामानाधिकरण्यम्। तथाच जातित्वेनाभिमतधर्मविशिष्टत्वं संकरत्वम्। वैशिष्ट्यं च स्वसमानाधिकरणत्व स्वसमानाधिकरणाभावप्रतियोगित्व-स्वाभावसमानाधिकरणत्वत्रितयसंबन्धेन। जातित्वेनाभिमतिनिवेशान्मूर्तत्वादेर्जातित्वमनङ्गीकुर्वतां मते जातिविशिष्टत्वस्य भूतत्वेऽभावात्तस्य सांकर्यं न स्यादितिशङ्का परास्ता। सामानाधिकरण्यनिवेशान्न घटत्वादिना पटत्वादेः संकरः। तृतीयसंबन्धनिवेशाच्च न द्रव्यत्वादिना पृथिवीत्वादेः स इति। अत्र भूतत्वादिकं न जातिः जातित्वेनाभिमतधर्मविशिष्टत्वात् व्यतिरेकेण पटत्ववदिति त्रीणि जातित्वबाधकानि। उत्तरन्तु त्रितयं जातिबाधकम्। एतादृशविशेषसूचनायैव मूले "संकरोऽथानवस्थिति"रित्यत्र मध्येऽथपदम्। अनवस्था अप्रामाणिकसजातीयानन्तपदार्थकल्पनाविश्रान्त्यभावः। अथवा स्वजनकज्ञानत्वव्यापकविशेषणज्ञानजन्यताकत्वम्। इयं चानवस्था जातीनां जातिमत्त्वे बाधिका। तथाहि। अनुमानम्। सामान्यं न जातिमत् सामान्यत्वात् व्यतिरेकेण पटवत्। अत्राप्रयोजकत्वशङ्कायां विपक्षेऽनवस्थारूपस्तर्को बाधकः।

अत एव घटो न जातिमान् घटत्वात् व्यतिरेकेण पटवदित्याभाससमानयोगक्षेमता निरस्ता । अत्राप्रयोजकत्वशङ्कायां विपक्षेऽनवस्थादिरूपबाधकतर्काभावेन तत्र तत्सद्भावेनोभयोः साम्याभावादिति । अपिचोक्तजात्यभावसाधकानुमानस्य संशादिप्रमाणान्तरसद्भावाच्च नाभाससाम्यम् । यद्यत्सामान्यं न तत्सामान्यवृत्ति यथा घटत्वद्रव्यत्वसत्त्वादीति । व्याप्त्यनुग्राहकस्य सामान्यत्वं न जातिः सामान्यवृत्तित्वात् व्यतिरेकेण पटत्वादिवदित्यनुमानान्तरस्य संभवादिति । रूपहानिः । रूपस्य लक्षणस्य हानिरभावः । तथाहि । निस्सामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं हि विशेषाणां लक्षणम् । तत्र जात्यङ्गीकारे तस्य लक्षणस्य अभावप्रसङ्ग इति केचित्समादधिरे । तन्न मनोरमम् । प्रमाणानुसारेण प्रमेयं कल्प्यम् । ननु स्वकपोलकल्पितलक्षणाख्यप्रमेयानुसारेण प्रमाणकल्पना । अतिप्रसङ्गात् । "मानाधीना मेयसिद्धिरि"ति न्यायेन तल्लक्षणपरित्यागस्यैव न्याय्यत्वादिति । अतो रूपस्य स्वतो व्यावर्तकत्वस्य हानिरभावः स्यादिति व्याख्येयम् । स्वतो व्यावर्तकत्वं च तद्व्यक्तित्वेनेतरभेदानुमापकत्वम् । तद्व्यक्तित्वं च तादात्म्येन । सैव व्यक्तिः । तथाच तादात्म्यसंबन्धावच्छिन्नस्वावच्छिन्नेतरभेदानुमापकत्वं तदित्युक्तं स्यात् । एवंच विशेषेषु जात्यङ्गीकारे तादृशस्वतो व्यावर्तकता न स्यात् । जात्याश्रयनिष्ठाया व्यावर्तकतायाः जात्यवच्छिन्नत्वनियमात् । न च परित्यज्यतां स्वतो व्यावर्तकत्वं जात्यैव चाङ्गीक्रियतां व्यावर्तकत्वमिति वाच्यम् । तथासति विशेषो विशेषान्तराद्भिद्यते विशेषादिति हेतूक्तौ विशेषत्वाश्रये तादात्म्यसंबन्धेनान्यस्यां व्यक्तौ वर्तमाने व्यभिचारापत्तेः ।

नच तद्विशेषो हेतूक्रियताम् । तत्वविशिष्टविशेषत्वजातिश्च हेतुतावच्छेदि-केति तद्विशेषत्वाश्रयरूपस्य तादात्म्येन व्यक्त्यन्तरे अभावेन न व्यभिचारः । नवा विशेषत्वजातेरपि अवच्छेदकेऽनुप्रवेशात्सामान्याश्रयनिष्ठ-व्यावर्तकतायाः सामान्यावच्छिन्नत्वनियमभङ्ग इति वाच्यम् । तथासति व्याप्यत्वासिद्ध्यापत्तेः । तत्वरूपस्वसमानाधिकरणव्याप्यतावच्छेदकान्तर-घटितत्वादिति । सामान्यवत्त्वं वा परित्याज्यं स्वतो व्यावर्तकत्वं वा हेयम् । तत्र स्वतो व्यावर्तकत्वपरित्यागे परमाणुभेदासिद्धिः । अव्या-वृत्तानां विशेषाणां व्यावर्तकत्वायोगात् । व्यावर्तकान्तराङ्गीकारे चानव-स्थापातात् । अतः सामान्यवत्त्वपरित्याग एव गरीयानित्युक्तमेव युक्तं । तथा चानुमानम् । विशेषो न जातिमान् स्वतो व्यावर्तकत्वाद्व्यतिरेकेण पटादिवदिति । अत्र सामान्याश्रयस्येत्याद्युक्तनियमसमर्थनमन्यत्लोकरीत्याऽवसेयम् । असंबन्धः । जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायस्य स्वनिरूपितप्रतियोगित्वानुयोगित्वान्यतरसंबन्धावच्छिन्नप्रतियोगिताका-भावस्तदर्थः । तथाच यत्र जात्यतिरिक्तप्रतियोगिकसमवायः प्रतियोगि-तानुयोगितान्यतरसंबन्धेन नास्ति तत्र जातिर्नास्तीति फलितम् । अत्र जात्यतिरिक्तप्रतियोगिकत्वनिवेशादभावत्वस्य जातित्ववादिमते तस्य समवायेनैवाभावे वृत्त्यङ्गीकारात् । अभावत्वरूपजातिसमवायस्य अभावे अनुयोगितासंबन्धेन सद्भावेन तदभावाभावात्तत्र जात्यभावो न स्यादिति शङ्का निरस्ता । अभावत्वरूपजात्यङ्गीकर्तृमतेऽपि तदतिरिक्तस्य कस्यापि धर्मस्य समवायेनाभावेऽनङ्गीकाराज्जात्यतिरिक्तप्रतियोगिकसमवायाभाव उभयसंमत एव । तथाचानुयोगितासंबन्धेन जात्यतिरिक्तप्रतियोगिकसम-

वायाभाववति रूपादौ जात्यभावो माभूदिति प्रतियोगित्वसंबन्धेन तादृशसमवायाभाववति गगनादौ जात्यभावो माभूदिति अनुयोगित्वनिवेशः । एवं चाभावो न जातिमान् अन्यतरसंबन्धेन जात्यतिरिक्तप्रतियोगिकसमवायाभावात् व्यतिरेकेण पटादिवदिति ।

**॥ नित्यसंबन्धः समवायः ॥**

संबन्धत्वं च प्रकारताविशेष्यतान्यविषयतावत्त्वम् । संयोगादिवारणाय नित्येति । गगनादिवारणाय संबन्ध इति । नचैवमपि गगनेऽतिव्याप्तिः । नित्यत्वस्योभयसंमतत्वात् । संबन्धत्वस्यापि सद्भावात् । तथाहि । प्रकारताविशेष्यतान्यविषयतावत्त्वं तदिति पूर्वमेवाभ्यधायि । निर्विकल्पकेच तुरीयविषयताङ्गीकारेण गगनविषयकनिर्विकल्पकमादाय प्रकारताद्यन्यतदीयविषयतावत्त्वस्य तत्र सत्त्वादिति वाच्यम् । निर्विकल्पकस्य प्रत्यक्षविशेषत्वेन गगनस्याप्रत्यक्षत्वेन तन्निर्विकल्पकस्यैवाप्रामाणिकत्वात् । नचैवमपि घटत्वेऽतिव्याप्तिर्दुष्परिहरा । तस्य प्रत्यक्षत्वेन तन्निर्विकल्पकमादाय तदीयप्रकारताद्यन्यविषयताया नित्यतायाश्च घटत्वे सत्त्वादिति वाच्यम् । प्रकारताद्यन्यकिंचिद्विषयतानिरूपितविषयतावत्त्वस्य तदर्थत्वात् । न चोक्तातिप्रसङ्गः । निर्विकल्पीयविषयतायाः विषयतान्तरानिरूपितत्वात् । नचैवं स्वरूपसंबन्धेऽतिव्याप्तिः । तस्य भूतलादिस्वरूपस्यानित्यत्वेऽपि गगने विद्यमानघटत्वाभावसंबन्धस्य प्रतियोग्यनुयोगिनोर्नित्यत्वेन तदभिन्नस्य तस्यापि नित्यत्वात् । संबन्धिभिन्नत्वं निवेश्य वार्यते चेदसंभवः । समवायस्यापि प्रमेयत्वादिसंबन्धित्वेन तद्भिन्नत्वायोगादिति वाच्यम् । अनित्यावृत्तिसंसर्गविभाजकोपाधिमत्त्वस्य दल-

द्वयार्थत्वेनादोषात् । तथाहि । संसर्गविभाजकस्वरूपत्वरूपोपाधेरनित्य-स्वरूपेऽपि विद्यमानत्वान्नातिव्याप्तिः । नापि नित्यसंयोगे सा । संयोग-त्वेऽनित्यावृत्तित्वस्य नित्यसंयोगत्वे संसर्गविभाजकत्वस्य चाभावात् । नाप्यसंभवः । समवायत्वस्य नित्यमात्रवृत्तित्वात् संसर्गविभाजकोपाधि-त्वाच्चेति । अथवा संबन्धिभिन्नत्वं निवेश्याप्यसंभवः शक्यपरिहारः । तथाहि । बुद्धिविशिष्टत्वं लक्षणघटकदलद्वयाभिप्रेतोऽर्थः । वैशिष्ट्यं च स्वनिरूपितप्रकारताविशेष्यतान्यतरवदवृत्तिस्वनिरूपितविषयतावत्त्वस्वस-मानकालिकनित्यताश्रयत्वोभयसंबन्धेन । तादृशान्यतरवदवृत्तिश्च समवाय-निष्ठसांसर्गिकविषयता भवति । बुद्धिपदेन घटो रूपीति बुध्युपादाने तन्नि-रूपितप्रकारतावद्रूपं तदवृत्तिः तन्निरूपितविशेष्यतावान् घटः तदवृत्तिश्च समवायविषयतेति नासंभवः । उक्तरीत्या एतादृशसंबन्धिभिन्नत्वस्य तत्र सत्त्वात् । नवा स्वरूपेऽतिव्याप्तिः । स्वरूपस्य प्रकारविशेष्यान्यतरस्व-रूपत्वेन तन्निष्ठसांसर्गिकविषयतायाः नियमेन प्रकारताविशेष्यतान्यतरव-द्वृत्तितया तदवृत्तित्वाभावात् । नापि निर्विकल्पकज्ञानमादाय घटत्वेऽति-व्याप्तिः तन्निरूपितविशेष्यत्वाप्रसिध्या स्वपदेन तदुपादानासंभवात् । इदं च लक्षणं नित्यसंयोगानङ्गीकारेण । अन्यथा तत्रातिव्याप्त्यापत्तेरि-त्याकलनीयम् ।

॥ ययोर्द्वयोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ ॥

ननु किंनामायुतसिद्धत्वमित्याशङ्कायां यन्निष्ठकालनिरूपिताधेय-तासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वं तदिति मूलं पर्यष्कार्षीन्न्याय-

बोधिनीकारः । अत्र बहवो दोषाः परिस्फुरन्तिः । तत्र हि जातिनिष्ठाधेयतासामान्यान्तःपातिनि प्रलयकालनिरूपिताधेयत्वे घटाभावेन तदवच्छिन्नत्वायोगात्तयोरयुतसिद्धत्वं न स्यात् । एवं शृंगाभावनिष्ठकालत्रयनिरूपिताधेयताया अपि शशावच्छिन्नत्वेन शृंगाभावशशयोरयुतसिद्धत्वापत्तिः । न च शृंगाभावनिष्ठाधेयतासामान्यान्तःपातिनि भूतलावच्छिन्नाधेयत्वे शशावच्छिन्नत्वं नास्तीति नातिप्रसङ्ग इति वाच्यम् । तथासति तुल्यन्यायेन कालनिरूपितघटनिष्ठाधेयतासामान्यांतःपातिनि भूतलावच्छिन्नाधेयत्वे कपालावच्छिन्नत्वाभावात्तयोरपि घटकपालयोरयुतसिद्धत्वं न स्यात् । अपिच शृंगाभावस्य शशादन्यत्र सद्भावेऽपि शशेतरभेदस्य शशमात्रवृत्तितया तन्निष्ठाधेयतासामान्यस्य शशावच्छिन्नत्वनियमेन तयोरयुतसिद्धत्वं स्यात् । किंच गगनादेर्विषयितासंबन्धेनेश्वरेच्छाज्ञानादौ सत्त्वेन गगनादिनिष्ठविषयितासंबन्धावच्छिन्नकालनिरूपिताधेयतासामान्यस्येश्वरज्ञानेच्छाद्यवच्छिन्नतया गगनेश्वरज्ञानयोरयुतसिद्धत्वं स्यात् । एवमेव सर्वेषामेव पदार्थानामविनश्यदवस्थस्वसत्तापर्यन्तं विषयितासंबन्धेनेश्वरेच्छाद्याश्रिततया अयुतसिद्धत्वं केवलान्वयि स्यात् । एवं कालिकादिसंबन्धमादायाप्युक्तापत्तिरूह्येति । अत्र केचित् । कालिकविषयत्वस्वरूपादिसंबन्धानवच्छिन्नत्वमाधेयतायां निवेश्यते । अतो नोक्तातिप्रसङ्ग इति वदन्ति । तन्न मनोरमम् । तथासत्यपि प्रलयकालनिरूपितजातिनिष्ठाधेयतायाः घटावच्छिन्नत्वाभावेन तयोरयुतसिद्धत्वं नस्यादित्युक्तदोषावारणात् । कालिकसंबन्धावच्छिन्नत्वात्साऽऽधेयता धर्तुं न शक्यत इति चेत्तदानीं जातेरयुतसिद्धत्वाभावप्रसङ्गः ।

वयंतु ब्रूमः । समवायसंबन्धावच्छिन्नत्वमाधेयतायां दीयते । अतो नोक्तातिप्रसक्तयः । नच जातिघटयोस्तत्त्वं दुरुपपादमिति वाच्यम् । वक्ष्यमाणानुगमानुसारेण तत्रापि सूपपादत्वात् । नचैवं सति समवायज्ञानं प्रत्ययुतसिद्धत्वज्ञानस्यापेक्षितत्वेनायुतसिद्धत्वज्ञानं प्रति समवायज्ञानापेक्षणेऽन्योन्याश्रय इति वाच्यम् । "लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेन समवायज्ञानार्थं लक्षणादिज्ञानापेक्षासद्भावेऽप्ययुतसिद्धत्वज्ञानस्यानपेक्षितत्वात् । न ह्ययुतसिद्धत्वमेव समवायस्य लक्षणं । येनोक्तदोषः स्यात् । किंनाम नित्यसंबन्धत्वादिकमन्यदेव । प्रमाणमपि विशिष्टबुद्धित्वादिकमन्यत्लोके पृथगेव विद्यते इति न कोऽपि दोषः पदमादधाति । किंचाश्रयीभूतायुतसिद्धत्वज्ञानमपेक्षमाणोऽपि समवायस्तद्घटकश्चेदन्योन्याश्रयदोषदुष्टः स्यादिति वदन् प्रष्टव्यो भवति । किं समवायज्ञानार्थमाश्रयज्ञानापेक्षा इति विशेषनियम । उताश्रितपदार्थज्ञानसामान्यं प्रत्याश्रयज्ञानं कारणमिति सामान्यनियमो वा । नाद्यः । अन्यत्रादृष्टत्वेन बाधकानिरूपणाच्चाप्रयोजकतया तादृशविशेषनियमानंगीकारात् । नापि द्वितीयः । तथासति पृथिव्यादिज्ञानार्थं लक्षणतयाऽवश्यापेक्षणीयगन्धादिज्ञानस्याश्रयीभूतपृथिव्यादिज्ञानसापेक्षत्वापत्त्या सर्वेषां लक्षणानामन्योन्याश्रयदुष्टत्वापत्त्या महदसमंजसं स्यात् । प्रामाणिकत्वान्नान्योन्याश्रय दोषस्तत्रेति चेत्समः समाधिः । "यश्चोभयोः समो दोषः तत्र नैकः पर्यनुयोज्य" इति न्यायात् । तथाचाधिकरणताविशिष्टाधिकरणतावत्त्वमयुतसिद्धयोर्लक्षणमिति फलितम् । अतो न यत्तदादिघटितत्वेनाननुगतत्वशङ्का । अधिकरणतायामधिकरणतावैशिष्ट्यं च तादात्म्यव्यापकत्वो-

भयसंबन्धेन । व्यापकत्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन । स्वाधिकरणत्वं च स्वाश्रयाधिकरणकालत्वसंबन्धेन । भेदप्रतियोगितावच्छेदकत्वं च स्वाश्रयावच्छिन्नस्वनिरूपकनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वसंबन्धेन । अत्र स्वपदार्थः कपालादिनिष्ठघटाद्यधिकरणता । तथाच स्वाश्रयकपालाद्यधिकरणकालेषु स्वाश्रयकपालाद्यवच्छिन्नस्वनिरूपकघटादिनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वसंबन्धेन स्वस्य सद्भावाल्लक्षणसङ्गतिः । उत्तरत्राधिकरणतावत्त्वं स्वाश्रयत्वस्वनिरूपकत्वान्यतरसंबन्धेन । अतः कपालादिघटाद्योर्द्वयोर्द्वयोरपि तादृशाधिकरणतावत्त्वनिर्वाहादयुतसिद्धत्वसंभवः । अत एव न पूर्वोक्तदोषः । घटाधिकरणेषु यावत्सु कालेषु घटादिनिष्ठजातिनिरूपिताधिकरणताया उक्तसंबन्धेन सत्त्वादिति । नन्वेवमपि कपालाद्यधिकरणेषु यावत्सु कालेषु घटादिसत्ता आवश्यकीत्यनुगमस्य निर्गलितार्थः । तथाच कपालाद्यधिकरणयावत्कालान्तःपातिनि घटोत्पत्तेः पूर्वकाले घटाभावादव्याप्तिः । एवं पृथिवीपरमाणुरूपयोरयुतसिद्धत्वं न स्यात् । परमाण्वधिकरणयावत्कालेषु कस्यापि रूपस्याभावात् । एवं पाकजरूपस्थलेऽपि घटे पूर्वरूपस्य नाशात् घटस्योत्तरकालेऽपि सत्त्वात् । तत्राप्युक्तदोष इत्यादि कथमत्र परिहर्तव्यमिति चेत् । अत एव स्वाधिकरणकालत्वस्ववृत्तिनिष्ठस्वावच्छिन्नाधेयतानिरूपकत्वसंबन्धाभ्यामवच्छेदकत्वाधिकरणत्वे निवेश्य पूर्वोक्तस्वसेत्यादिभेदवत्त्वसंबन्धेन पदार्थविशिष्टत्वमित्यननुगमय्याधिकरणताविशिष्टाधिकरणतावत्त्वमित्यनुगमः

क्रृतः । तस्यायमाशयः । तन्तोः पटादधिककालवृत्तित्वेऽपि पटाधिकरणत्वविशिष्टस्य तस्याधिककालवृत्तित्वाभावात् । एवमेव पाकजस्थले रूपाद्युत्पत्तेः पूर्वमुत्तरं च घटादेः सत्त्वेऽपि रूपाधिकरणताविशिष्टस्य तस्याभावात् । स च घटो रूपाधिकरणकाल एवेति नोक्तदोषः । एवमेव परमाणुरूपादावपीत्यलं पल्लवितेन । अथात्रेदमनुपपन्नम् । किमनुपपन्नम् । यत्पूर्वं जात्यादिनिष्ठाधेयतायां कालनिरूपितायां समवायसंबन्धावच्छिन्नत्वमतिप्रसङ्गवारणाय न्यवेशि । तदेवानुपपत्तिग्रस्तम् । अतः यदि कालनिरूपितापि घटत्वघटरूपादिनिष्ठाधेयता समवायसंबन्धमवच्छिन्द्यात् । तदा घटत्वघटरूपादिकं काले समवेयात् । तच्च बाधितमिति । सत्यम । न ह्याधेयतायां समवायसंबन्धावच्छिन्नत्वं निवेशयामः येनैवमुपलभेमहि । किंनामानुगमघटकीभूतसंबन्धप्रविष्टस्वाश्रयावच्छिन्नस्वनिरूपकनिष्ठसमवायसंबन्धावच्छिन्नाधेयनेत्यत्र । स्वाश्रयनिष्ठावच्छेदकतायां समवायसंबन्धावच्छिन्नत्वं निवेश्यते । तथा चोक्तानुगमे भेदप्रतियोगितावच्छेदकत्वं स्वाश्रयनिष्ठसमवायसंबन्धावच्छिन्नावच्छेदकतानिरूपकस्वनिरूपकनिष्ठाधेयतानिरूपकत्वसंबन्धेन । तथाच नोक्तदोषः । कालनिरूपितायां घटादिनिष्ठाधेयतायां कपालादेः समवायेनैवावच्छेदकत्वात् । समन्वयप्रकारः पूर्वोक्त एवेति न कस्याप्यनुपपत्तिः । अथवाऽधिकरणताविशिष्टाधिकरणतावत्त्वमेवायुतसिद्धत्वम् । अत्र वैशिष्ट्यं च अधिकरणतावत्त्वं च पूर्वोक्तसंबन्धैरेव । परन्तु स्वाधिकरणत्वं स्वाश्रयस्वनिरूपकोभयाधिकरणत्वसंबन्धेन । यद्वा स्वाश्रयाधिकरणत्वस्वनिरूपकाधिकरणत्वोभयसंबन्धेन । एवं च कपालादेः घटाद्यधि-

ककालवृत्तित्वेऽपि न पूर्वोक्तदोषः। स्वाश्रयाधिकरणत्वमात्रस्य संबन्धतयाऽनिवेशात्। स्वनिरूपकाधिकरणत्वस्यापि प्रवेशात्। उभयाधिकरणत्वं चोभयसत्तादशायामेवेति। अधुना स्वाश्रयाधिकरणत्वस्थाने पूर्वोक्तदोषवारणाय स्वाश्रयत्वविशिष्टाधिकरणत्वं निवेश्य तत्परिष्काराय प्रयासो नादरणीय इति। तन्तुनाशात्पटनाशकाले विनश्यदवस्थं पटादिकमेकस्मिन् तन्तुनाशक्षणे अपरानाश्रितमपि तिष्ठतीत्यतोऽविनश्यदवस्थमिति। अविनश्यदवस्थत्वं च विनश्यदवस्थाशून्यत्वं। तच्च नाशविशिष्टान्यत्वं। वैशिष्ट्यं च स्वप्रतियोगित्वस्वप्रागभावाधिकरणक्षणप्रागभावाधिकरण क्षणप्रागभावानधिकरणक्षणवृत्तित्वोभयसंबन्धेन। अनेन विनश्यदवस्था क्षणद्वयसाधारणीत्युक्तं स्यात्। तेन यत्र तन्तुनाशात्तन्तुद्वयसंयोगनाशः ततः पटनाशः तत्र क्षणद्वयं विनाश्रयं पटावस्थानेऽपि न दोषः। तदानीं विनश्यदवस्थावत्त्वेनाविनश्यदवस्थत्वाभावात्। अविनश्यदवस्थत्वदशायां चापराश्रितत्वानपायात्। समन्वयस्तु। स्वं पटनाशः स्वप्रतियोगित्वं पटे। एवं स्वप्रागभावाधिकरणं क्षणः पटनाशाव्यवहितपूर्वक्षणः तत्प्रागभावाधिकरणं क्षणः ततोऽपि पूर्वक्षणः पटनाशाव्यवहितपूर्वद्वितीयक्षणः। उक्तस्थले च तन्तुनाशक्षणः। तत्प्रागभावाधिकरणं क्षणः पूर्वतृतीयक्षणः। तदनधिकरणत्वं द्वितीयप्रथमयोरिति तन्तुनाशकाले विद्यमानोऽपि पटः नाविनश्यदवस्थ इति न कोऽप्यतिप्रसङ्ग इत्यवधेयम्। अथात्र **ययोर्द्वयोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठत** इत्यत्र विद्यमानैवकारः अजागलस्तनायितः। यतोऽपराश्रितमित्यत्राश्रितत्वं समवायसंबन्धेनेति कण्ठत एवोद्घोषि। यदीतरसंबन्धावच्छिन्नाधेयतावदप्यपरानाश्रितं स्यात्।

तदा संबन्धविशेषलाभायापराश्रितमेवेत्युक्तिः सङ्गच्छेत । नचैवमपि तर्हि आधेयतावद्यद्यत्तदपराश्रितमेव नतु कचिदपि स्वाश्रितम् । तथाचैवकारो विफलः। एवमनुगमे सामानाधिकरण्यमात्रमनिवेश्य व्यापकत्वनिवेशो व्यर्थ इति । उच्यते । यतः कालिकसंयोगादिसंबन्धेन तन्तुषु पटो वा स्यात् पटे तन्तुर्वा स्यादित्यपराश्रितमेवेति न । किन्तु परस्पराश्रितत्वं । समवायसंबन्धेन तु द्वयोर्द्वयोर्मध्ये एकमपराश्रितमेव । न तु परस्पराश्रित-मिति समवायसंबन्धलाभायैवकारः। अत एवान्यलभ्यत्वादपरसमवेतमिति नावादीद्ग्रन्थकृत् । किंच "यु मिश्रणामिश्रणयो"रिति धातोः कर्तरि क्त-प्रत्यये युतममिश्रितमिति लभ्यते । तन्नेत्ययुतं सर्वदा मिश्रितं कदापि मिश्रणाभाववन्नेत्यर्थः। तयोर्द्वयोर्मध्ये अपरपरित्यागेन एकस्य वृत्तिर्नेति लभ्यते । इदं च समवायसंबन्धेन वृत्तित्वविवक्षायामेवोपपद्यते । कालिकसंयोगादिसंबन्धेन कपालघटयोर्मध्ये घटः कपालं परित्यज्या-न्यत्रापि भूतलादौ विद्यत इति । समवायसंबन्धेन तु द्वयघटकापरक-पालाश्रितमेवावतिष्ठते नतु भूतलाद्याश्रितमिति । तथाचायुतं सत् सिद्ध-मिति नञ्द्वयघटिततत्पदार्थनिर्वचनपरे मूले एवकारप्रयोगः। तदर्थवर्णनपरे चानुगमे व्यापकत्वस्य संबन्धतया प्रवेश इति सर्वं चतुरस्रम् ॥

नारायणेति सन्नाम्नां पश्चिमालयवासिनाम् ।
बल्लाळोपपदानान्तु प्रार्थनानुस्मृतेः कृते ।
कल्पवृक्षगुहावर्तिदेवालयकृतस्थितेः ।
देवदेवस्य पुरतः चन्द्रचूडमहात्मनः ॥ २ ॥

तद्दयारचितस्सोऽयं संग्रहार्थस्य संग्रहः ।
गोपीजनेशपदयोः भक्त्यादरसमर्पितः ॥ ३ ॥
प्रीयेतां तेन देवेशौ भारतीकमलाप्रियौ ।
अनन्तकारुण्यनिधी अनन्ततनुजन्मनः ॥ ४ ॥
नारायणेतिसन्नाम्नस्त्रिशतग्रामवासिनः ।
दद्यास्तामनवद्यां तां हृद्यां विद्यां विमुक्तिदाम् ॥ ५ ॥

॥ **श्रीकृष्णार्पणमस्तु** ॥

---

पु. ८८. प. ८. त्याज्यत्वादित्यतः परं यद्यपीत्यतः प्राक् इदं वाक्यं मुद्रणदोषात्पतितं पठनीयम् ।

अथवा सन्दिग्धं च तत् साध्यं चेत्येवविग्रहः । न तु बहुव्रीहिः । तत. परं मतुप् । आधारतावानेव मतुबर्थः । नचोक्तदोषः । स्वप्रकारकसंदेहविशेष्यत्वसंबन्धावच्छिन्नत्वादाधारतायाः । अनेन संबधेन वन्ह्याधारत्वस्य ह्रदेऽपि सत्त्वात् । एतत्सूचनार्थमेव संदिग्धेति साध्ये विशेषणमित्यस्मत्प्रदर्शितार्थविवरणं मूललभ्ययेवेति न वैयर्थ्यं, नाप्यक्षरालभ्यत्वदोषः । नच "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इति न्यायविरोधः । "कृष्णसर्पवद्बिल"मिति प्रयोगं प्रदर्शयता फणिमहाभाष्यकारेणैव तन्नियमस्यानियतत्वसूचनात् । संदिग्धश्चासौ साध्यवांश्चेत्येव कर्मधारयः । अर्थस्तूक्त एव । अतो नोक्तदोषः इत्यपि केचित् ।

---

एतद्ग्रन्थकर्तृभिरेव विरचितौ मुद्रापयित्वा प्राकाश्यं नीतौचेतरौ ग्रन्थौ ।

१) श्रीभाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितपञ्चसरव्याख्या.

२) न्यायामृतकुल्या चेति.

---

Printed by K. Raghavendra Rao, at Majestic Press, Udipi & Published by Sri Vibudhesha Thirtha Swamiar of Admar Matt, Udipi. Author Sri P. Narayana Acharya Nyaya Vidwan, Udipi. 4—2—1956